औ३होवा । पी२३४णाः । ज२३४पा । २ । मत्सरासो२३ । मा२दा२३४औहोवा च्यू२३४ताः ॥ १८ ॥

( इन्द्रसामानित्रीणि ॥ ) औ३होवा । अभिसोमास-आयवः । औ३होवा । पवा२ । तेमा३ओ५वा६५६ । दि-यम्मदम् । समू२ । द्रस्या३ओ५वा६५६ । धिविष्टपेरमनी-षिणा२ः । औ३हो३१३ । मत्सा२ । रासा३ओ५वा६५६ । मदच्युता२३४५ः ॥ १९ ॥

अभिसोमासआया६वाः । पवा२ । तेमा३ओ५वा-६५६ । दियम्मदम् । समू२ । द्रस्या३ओ५वा६५६ । धिवि-ष्टपेरमनीषिणा२ः । मत्सा२ । रासा३ओ५वा६५६ । मद-च्युता२३४५ः ॥ २० ॥

अभिसोमासआया६वाः । पवन्ता६मा । दिया२ंमा-

अथ नवमी।

३ १२ ३१२ ३२३ २१ १२३१
पुनानःसोमजागृविरव्यावारैः*परिप्रियः।
१र २र ३१
त्वंविप्रोअभवोऽङ्गिरस्तम
२३१२
मध्वायज्ञंमिमिक्षणः‡ ॥८॥ ५३¶

५ ३ २१ २१ २ ४ ५
२३४दाम्। समुद्रस्या। धिविष्टपाइ। मनाइइषाइणाः।
१ १२१ १ ३ ५२२ ३ ५
मात्सरासोर२३। मारदा२३४औहोवा। च्यूर२३४ताः॥२१॥५२

"आयवः"§ गमनशीलाः "सोमासः" सोमाः मद्यं" मदकरं मदं आत्मीयं रसं "अभिपवन्त:" अभितो निर्गमयन्ति। कुत इत्युच्यते—"समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रितपवित्रे। यद्वा। समुद्रस्य यस्मात्समुद्रवन्ति रसाः तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने "पवित्रे" निर्गमयन्ति। कीदृशाः? "मनीषिणः" मनसईशितारः "मत्सरासः" मदकराः "मदच्युतः" मदकरेण रसेन च्यावयितारः॥

"विष्टपे", "विष्टपि"—"मदच्युतः", "स्वर्विदः"—इति च पाठौ॥ ८॥ ५२

---

* "अव्योवारे"-इति
† "वोऽङ्गिरस्तमो"-इति, } ऋ०।
‡ "मिक्षमः"-इति च
¶ ऋ० ७, ५, १३, १।
§ 'आयवः मनुष्याः'-इति वि०। 'आयव'-इति मनुष्यनामसु पठद्यते नैघण्टुकम् (२, ३)।

अथ दशमी ।

१ २ २ २ ३ १ २ ३ १ २ ३ २
इन्द्रायपवतेमदःसोमोमरुत्वतेसुतः ।

५ र ४ ५र ४र ५ ४ १रर
(सोमसाम ॥) पुनानःसोमजागृविरव्याः । वारैःपा-
७ १ र र १ २
रिप्रियार२ः । त्वंविप्रोअभवोङ्गाइरा२३४ । स्तमा३ ।
१ २र १ १ ३ ५र र ३ ५
माध्वायज्ञा२३म् । मा२इमा२३४औहोवा । क्षा२३४णाः ।
॥ २२ ॥ ५३

हे सोम! "जागृविः" जागरणशीलः "प्रियः" प्रीणयिता* त्वं "पुनानः" पूयमानः सन् "अव्याः" मेष्याः "वारैः" वालैर्निर्मिते दशापवित्रे परिक्षरसि। "अङ्गिरस्तम" हे अङ्गिरसां वरिष्ठ! "विप्रः" मेधावी त्वं पितॄणां नेता "अभवः"† भवसि। स त्वं "नः" अस्मदीयं "यज्ञं" "मध्वा"‡ मधुना आत्मीयेन रसेन "मिमिक्ष"§ सेक्तुमिच्छसि। मिहेः सेचनार्थस्य (भ्वा०प०) सनि रूपम् ॥ ८ ॥ ५६

---

* 'प्रियः प्रियतरः, भूतानां प्रियः'-इति वि० ।

† 'सार्वकालिकोलङ्' (३, ४, ६)।

‡ सुप आले रूपम् (७, १, ३९)।

§ 'मिमिक्ष सिञ्च' इति वि० ।

३ १ २ ३ १र २र ३
सहस्रधारोऽत्यव्यमर्षति
१ २ ३ १ २
तमीमृजन्त्यायवः ॥ १० ॥५४*

५ र २ ० १ १र र
इन्द्रायपा । वता२इमादा२ः । सोमोमरुत्वता२इ-
१ १ २र १ १
स्वता२ः । स । हास्रधारः । अतिअव्यमा२र्षाती२ ।
१ १ २ १
तमा२इमार्जा२ । तिआयार२३वा३४३ः । ओ२३४५इ ।
डा ॥ २३ ॥

५ र २ र १
(स्वःपृष्ठमाङ्गिरसम् ॥) इन्द्रायपा । वतेमदाः ।
२र र १ १ १ १ २र
सोमोमारु२ । त्वतेचो२इ । स्वता२ः । स । हास्रधारः ।
१ २ ३ ५ ३ ५ १
अतिअव्यमा । र्षाताओ२३४वा । ज२३४पा । तमीचो-
१ १र २ १
२इ । मार्जा२ । तिआया२३वा३४३ः । ओ२३४५इ ।
डा ॥ २४ ॥

५ र २ ४ ५ ४ ५ १र र
(सोमसाम ॥) इन्द्रायाउपावताइमदाः । सोमोम-
२ २ १ २र १ २
रुत्वता१इस्व३ताः । स । हास्रधारः । अतिअव्यमा३ ।

---

* ऋ० ९, ४, १५, २ ।

अथैकादशी ।

१२　　२१ २३ १र २र ३ १ २
पवस्ववाजसातमोभिविश्वानिवार्य्या ।
१　२३१ २३१र २र
त्वꣳसमुद्रःप्रथमविधर्म
३१२　　३२
न्देवेभ्यःसोममत्सरः ॥ ११ ॥५५ *

४५　२१२ २　४५　१ २　५र र
षाती । तमाऔ३होऽ३इ । माजा । ता२या२३४औहो
२　५
वा । या२३४वाः ॥ २५ ॥

४५ र ४र　३　५　२१ १र
पवस्ववाजसा । इहा । ता२३४माः । अभिविश्वा-
१ २र　१ २　५र र　१२ १र २
निवारिया । त्वꣳसा२मू२३४औहोवा । द्रःप्रथमे विधर्म-
२ १　१ ३　५र र　१ १
न् । दाइवाये३ । भ्या२ःसो२३४औहोवा । ममत्स-
२
रा१ः ॥ २६ ॥ ५४

"मदः" मदकरः "सुतः" अभिषुतः "सोमः" "मदन्वते" मदवन्निसहते "इन्द्राय" इन्द्रार्थं "पवते" चरति । ततः "सहस्रधारः" बहुधारोपेतः सोमः "अव्यम्" अविमयं पवित्रम् "अत्यर्षति" अतिगच्छति तमिमं "आयवः" मनुष्या ऋत्विजः "मृजन्ति" शोधयन्ति ॥ १० ॥ ५४

---

* ऋ० ७, ५, १८, २ ।

अथ द्वादशी।

१२ १ २३१ २ ३ १ २
पवमानाअसृक्षतपवित्रमतिधारया।
३१ २ ३ १ २ ३ १२ ३ २र
मरुत्वन्तोमत्सराइन्द्रियाहया
३ २ ३ १२र
मेधामभिप्रियाꣳसिच॥१२॥५६*

॥ इति तृतीय-दशति ॥

४ ५ र र ४ १ र
(पवित्रम्॥) पवमानाअसृक्षतपवाइ। त्रामतिधार

हे "सोम!" "विश्वानि" सर्वाणि "वार्या" वरणीयानि स्तोत्राणि† "अभि" लक्ष्य "वाजसातमः" अतिशयेनान्नस्य लम्भकस्त्वं "पवस्व" क्षर। हे सोम! "देवेभ्यः" देवानां‡ "मत्सरः" मदकरः "समुद्रः" समुन्दनशीलः¶ "विधर्मन्" विशेषेण पोषक!॥ त्वं "प्रथमे" मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं क्षर॥

"विधर्मन्"-"विधारयम्"-इति, "वाजसातये"-"वाजसातमः"-इति, "वार्या"-"काव्या"-इति च क्रमेण साम्नश्छन्दसः पाठाः॥ ११ ॥ ५५

* ऋ० ७, ५, १६, ५।

† 'वार्या वरणीयेन उदकेन' इति वि०।

‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति का० (पा० २, ३, ६२)॥

¶ "समुन्दतीतिवा" इत्यादि निरुक्तोक्तेः (२, १०)। 'समुद्रः समुद्रसंस्थानीयः' इति वि०।

|| "विधर्मन्=विधर्मणि. विविधकर्मणि कर्मकारणे देवे' इति वि०।

१ र र २ १ १ २
यामरुत्वन्तोमत्सराइन्द्रीऽ३याः। स्वयाः। मा२३इधाम्।
१ २ १ ३ ५र र ३ ५
अभायेऽ३। प्रा२या२३४औहोवा। सी२३४चा॥ २७ ॥५६

"पवमानाः" पूयमानाः सोमाः "धारया" आत्मीयया "पवित्रम्"* "अति" अतीत्य "असृक्षत" सृज्यन्ते। कीदृशाः? "मरुत्वन्तः" मरुद्भिर्युक्ताः "मत्सराः" मदकराः "इन्द्रियाः" इन्द्रजुष्टाः। "मेधां"† स्तुतिं "प्रियांसि" अन्नानि च "अभि" लक्ष्य स्तोतृभ्य उभयं कर्त्तुं वा "इयाः" यज्ञे गन्तारः सृज्यन्ते ॥१२॥५६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य पञ्चमखण्डः॥ ५॥

॥ इति वार्हतम् ॥

---

* "पवित्रं पुनातेः। मन्त्राः पवित्रमुच्यते। 'येन देवाः पवित्रेणात्मानं पुनते सदे'त्यपि निगमो भवति॥ रश्मयः पवित्रमुच्यन्ते। 'गभस्तिपूतो नृभिरद्रिभिः सुत' इत्यपि निगमो भवति॥ आपः पवित्रमुच्यते। 'शतपवित्राः स्वधया मदन्ती' बहूदकाः॥ अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्रमुच्यते। इन्द्रः पवित्रमुच्यते। 'अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु' इत्यपि निगमो भवति" इति (नि० ५, ६)।

† 'मेधां प्रज्ञाम्'-इति वि०।

अथ षष्ठखण्डे—

सैषा प्रथमा।

१र २र३१२३२ ३ १२ ३१ १ ३ २३ १र २र
प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष।
३ १ २३ १ २३१३१ २ ३
अश्वंनत्वावाजिनंमर्जयन्तोच्छा
१ २ ३१ २
बर्हीरशनाभिर्नयन्ति॥१॥५७*

२ ३५ ३१ २१
(अशनम्॥) ओइप्रतु। द्रुवा३१। द्रवा। परि
२ २३४५ २ २५ ३२ २१
कोश३। अन्निषीदा। औइनभिः। इुवा३१। पुना।
२ १ २३४५ २ ३४ ३२ २१
नो३अभि। वाजमर्षा। आअश्वम्। इुवा३१। नत्वा।
२ १ २३४५ २३५ ३२ २१
वा३जिनम्। मर्जयन्ताः। ओअच्छ। इुवा३१। बर्हीइः।
१२ २ २ ४
रशना। भा३४३इः। ना३या५न्ताई५६इ॥२८॥

४५ ४५ २१ २१
(वृषोशनं साम॥) प्रतु। एप्रतू। द्रवा। द्रवा।
२ २३४५ ४५ ४५ २१
परिको३। अन्निषीदा। नृभिः। एनृभिः। पुना।
२१ २१ २३४५ ४५ ४५
पुना। नो३अभि। वाजमर्षा। अश्वम्। एअश्वाम्।
२१ २१ २१ २३४५ ४५ ४५
नत्वा। नत्वा। वा३जिनम्। मर्जयताः। अच्छ। एअच्छा।

* छ० १,१,१०,१=ऋ० ९,३,२२,१=ऊहे १,१,४—१९,१,७।

२ १ २ १ २ १र २ २ १ ५ ५
बर्हाइः । बर्हाइः । रथनाभिः । नये३४ । धियाइधा-
२ १ १ १ १
उवा । तार२३४५इ ॥ २९ ॥

४ ५ ४ १ र
( जानस्याभीवर्तौद्वौ ॥ ) प्रतुद्रा । वापरिकोशाम् ।
२ २ १ २ १र २ १र ५ २ १
निषीश्दा । साइद्रा । औहोइ । औहोश्वा । नृभिः
रर ० २ १ २ २र २
पुनानोअभिवा । जमार२३र्षा । आर्षा । औहोइ ।
२र ५ २ १ र र ०
औहो३वा । अश्वन्नत्वावाजिनम्मा । अयार२३न्ताः ।
१ २ २र २ २र ५ २ १र२ १ २
र्याता । औहोइ । औहो३वा । अच्छाबर्हाइः । रथ-
१र२ ३२ ५ ५ २०१ १ १ १
नाभिः । नये३४ । धियाइधाउवा । तार२३४५इ ॥ ३० ॥

५र ५ १ २ ५ ५ १ १
धाओ३इधा । उज्जवा३४ । ओइधा । प्रतुद्रवा ।
२ २ १ ४ ५ २ १ २ १ २ १
परिको३ । अभिषीदा । न भाइःपुना । नो३अभि ।
२ १ ४ ५ २ १ २ १ १ २ ४ ५
वाजमर्षा । अश्वन्नत्वा । वा३जिनम् । भर्जयन्ताः ।
र ५ २ २ ५ ५ २ १र २ १
धाओ३इधा । उज्जवा३४ । ओइधा । अच्छाबर्हाइः ।
२ १ र २ २ ४
रथना । भा३४३इः । ना३या५० ता६५६इ ॥ ३१ ॥

४ ५ १ र
( त्रिष्टुवौशनम् ॥ ) प्रान् । द्रवापरिकोशाम् ।
१ २ १ २१ २ १ १ २ ३ ४ ५
निषीऽदा । नृभाइःपुना । नोऽअभि । वाजमर्षा ।
१ र र ७ २ १र २ र
अश्वन्नावाजिनम्मा । जयाऽ३ंताः । अच्छावर्हीइः ।
११र २ १ ४
रशना । भाऽ४ऽइः । नाऽयाप्ऽताईऽइ ॥ ३२ ॥ ५७

उशनाऋषिः* । हे सोम ! "नु" क्षिप्रं† "प्रद्रव" प्रगच्छ आगत्याच "कोशं" द्रोणकलशं परिनिषीद" निषण्णोभव। "नृभिः" नेतृभिः "पुनानः" पूयमानः "वाजम्" अन्नं यजमानार्थमुद्दिश्य "अभ्यर्ष" [वाजं सङ्ग्रामं वा] "वाजिनं" बलवन्तं "अश्वं न" अश्वमिव तं यथामार्जयन्ति तद्वत् त्वाम् "अर्जयन्तः" शोधयन्तः "बर्हि"§ यज्ञम् अच्छ "प्रतिरशनाभिः" रशनावदायताभिरङ्गुलीभिः "नयन्ति" अध्वर्युप्रमुखाः ॥ १ ॥ ५७

---

* "काव्यः"-इति ऋषि नै०।

† 'अच्छ आप्नुम्'-इति वि०। मन्त्रश्रुतौ 'अच्छा'-इति दीर्घो निपातत्वात् ( ६, ३, १३६ पा०। )

‡ 'रशना यूपयोजनी'-इति वि०।

¶ "नु-इत्येषोऽनेककर्मा, इदन्नु करिष्यतीति हेत्वपदेशे, कथन्नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीदिति चाप्यस्युपमार्थे भवति वृक्षस्य नु ते पुरुहूतवयाः वृक्षस्येव ते पुरुहूत शाखाः"-इत्यादि नि० १, ४। "नु"-इति क्षिप्रनामसु च प्रथमन्नैघण्टुकम् ( २, १५ )।

§ 'बर्हिः प्रस्तरम्'-इति वि०।

|| 'रशनाः'-इति अङ्गुलिनामसु पठं नैघण्टुकम्।

अथ द्वितीया ।

१ १२ ३ १ २ ३ १ २ ३ १ २ १ २
प्रकाव्यमुशनेव ब्रुवाणोदेवोदेवानांजनिमाविवक्ति ।
१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः
३ १ २ ३ २ ३क २र ३ १ २
पदावराहोअभ्येतिरेभन् ॥ २ ॥ ५८*

४ऽ १र १
( वाजसनीद्वे ॥ ) प्रा । काविया२म् । उशनेवा२ ।
१ २ १२र १र १
ब्रवा२३णाः । देवोदेवा२ । नाञ्जनिमा२ । विवा-
२ १ १ १ १
२३क्तो । महिव्राता२ः । शुचिबन्धू२ः । पवा२३काः ।
१र १र ३ २ ५र र १
पदावारा२ । होअभियार३इ । तिरा३४औहोवा । भा
१ १ १ १
२३४५न् ॥ ३३ ॥
१ र १ १ १२र
प्रकाविया२म् । उशनेवा२ । ब्रुवाणा२ः । देवो
१र १ १
देवा२ः । नाञ्जनिमा२ । विवाक्तो२ । महिव्राता२ः ।
१ १ १र १
शुचिबन्धु२ । पवाका२ः । पदावारा२ । होर२ ।
३ १ ५र र १ १र ३ १ १ १ १
भिया३४औहोवा । तिरेभार३४५न् ॥ ३४ ॥

* उ० ४, २, १, १= ऋ० ९, ४, १, २=कचे ६, १, ४ ;— १६, १, १८ ;— १९, १, ३—६ ।

(वाजजित्साम ॥) प्रकाव्यमुशनेवब्रूइवाणो। देर-
३४वाः। देवानाञ्जनिमावीइवाक्ती। मा२३४च्ती। व्रतः
शुचिबन्धुः पाइवाकः। पा२३४दा। वराहोअभ्येतिरा-
२३। हाउवा३। भा२३४५न्॥ २५॥

(वाराहम्॥) हाउहाउ। ऊप्। प्रकावियाम्।
उशने। वब्रुवाणाः। देवोदेवा। ना३०जनि। मावि
वक्ती। महिव्रताः। शुचिवा३। धुःपवाकाः। हाउ
हाउ। ऊप्। पदावरा। होइअभि। आ३४३इ।
तीइरा५इभा६५६न्॥ २६॥

॥ इति पञ्चदशस्यार्द्धः प्रपाठकः॥

उषगणो वासितऋषिः*। "उशने एव" तन्नामकऋषि-
रिव "काव्य" कविकर्म स्तोत्रं "ब्रुवाणः" "देवः" स्तोता †

* "उषगणो वासिष्ठः"-इति ऋषि- नै०।

† 'देवः सोमः'-इति वि०।

अयमृषिर्वृषगणोनाम "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि* "प्रविवक्ति" प्रकर्षेण वदति। [ वच परिभाषणे (अदा०प०)। व्यत्ययेन विकरणस्य श्लुः (३,१,८५) बहुलं छन्दसीति (७,४,७८) अभ्यासस्य इत्वम् ] "महिव्रतः प्रभूत-कर्मा†। "शुचिबन्धुः" बध्नन्ति गृह्णन्तीति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः‡ "पावकः" पापानां शोधकः "वराहः" वरञ्च तदहश्च वराहः [ "राजाहःसखिभ्यष्टच्"-इति टच् समासान्तः। तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्। अर्शआदित्वा-न्मत्वर्थीयोऽच् ] तादृशः¶ सोमः "रेभन्" शब्दं कुर्वन् § "पदानि" स्थानानि पात्राणि "अभ्येति" अभिगच्छति। यद्वा। यदा कश्चन वराहः "पदा" पदेन भूमिं विक्षियमाणः शब्दं करोति तद्वत् ॥ २ ॥ ५८

* 'जन्मानि कर्माणि वा'-इति वि०।

† 'महिव्रतः महतः कर्मणः व्रतस्य वा धारयिता' इति वि०।

‡ 'शुचिबन्धुः शोभनबन्धुः शुद्धबन्धुर्वा'-इति वि०।

¶ 'वराहः सोमः'-इति वि०। "वराहो मेघो भवति वराहारः। वरमाहार-माहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरोअद्रिमस्तेत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराह-मिन्द्र एमुषमित्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते 'ब्रह्मणस्पति-र्वृषभिर्वराहैः। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते—'पश्यन् हिरण्यचक्रा-नयो दंष्ट्रान् विधावतो वराहून्'"-इति नि० ५, ४।

§ 'रेभन् स्तुवन्' इति वि०।

अथ तृतीया।

१ २र ३र ३१र ३र ३ १ २ ३ १र ३र ३ २
तिस्रोवाचईरयतिप्रवह्निर्ऋतस्यधीतिंब्रह्मणोमनीषाम्।
१ २ ३१२ ३१ २ ३
गावोयन्तिगोपतिंपृच्छमानाः
१ २३ १ ३ २
सोमंयन्तिमतयोवावशानाः॥ ३ ॥ ५९*

(संक्रोशाम्लयः॥) होइ। हो। हा३होइ।
२१र२ २ १ २३४५ १ १
तिस्रोवाचा। ई३रय। तिप्रवह्नीः। होइया२३होइ।
२१र२ २ १ २३४५ २र १ १
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। आ। होइया२३होइ।
२१र २ २ १ २३४५ १ २१
तिस्रोवाचाः। ई३रय। तिप्रवह्नीः। होइहा। इहोइहा।
५ २ २१र २ २ १ २३४५
औ३हो३१इ। इहा। तिस्रोवाचाः। ई३रय। तिप्रवह्नीः।
१ २१ ५ २ २१र २
होइया। इयोइया। औ३हो३१इ। इया। तिस्रोवाचाः।
२ १ २३४५
ई३रय। तिप्रवह्नीः॥ १॥

३ २ ३५ २र १
(वैणविंशाले द्वे॥) इहोइह। इहोइहा३हो।
३र २३५ २ १र २ ० १ २३४५ ४र
वाहोइह। तिस्रोवाचाः। ई३रय। तिपवह्नीः। इहा

---

* उ० १,१,१०,१=ऋ० ७,४,१७,४=अथ २,१,१०=अथो १,२,९।

वा५। इहोवार३। ई३४हवाइ। ई५। इहा।
तिस्रोवाचाः। ई३रय। तिप्रवक्त्रीः। इहोवार३।
ई३४हवाइ। इहा। तिस्रोवाचाः। ई३४रय। तिप्र-
वक्त्रीः। आऔ३हो। आऔ३हो३४। औहोवा।
हा३हाइ। तिस्रोवाचाः। ई३रय। तिप्रवक्त्रीः। आ।
औ३होवाहा३४। औहोवा। तिस्रोवाचाः। ई३
रय। तिप्रवक्त्रीः॥ २॥

ओहो३। आहाआहा। ऋतस्यधाइ। नी३०ब्रह्म।
णोमनीषाम्। हहवोइ। हहहाहहो३। गावोयन्ताइ।
गो३पतिम्। पृच्छमानाः। इहहोइ। इहहाहहोइ।
सोमंयन्ताइ। मतयः। वा३४३। वा३आ५नाइ५ई॥
॥ ३॥ ५९

१५ख,

पराशरऋषिः*। "वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं† "ब्रह्मणः"‡ परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याण-वाचं च प्रेरयति। किञ्च। "गोपतिं"¶ वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यो "यन्ति" स्व-पयसा माश्रयितु मभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारः§ "सोमं" "यन्ति" स्तोतु मभिगच्छन्ति‖॥ ३ ॥ ५८

---

* "प्राशयः"-इति ऋषि-सं०। "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवति। इन्द्रोऽपि पराशर उच्यते पराशातयिता यातूनाम् इन्द्रो यातूना मभवत् पराशर इत्यपि निगमो भवति"-इति नि० नै०६,३० ॥

† 'धीतिं कर्म'-इति वि०।

‡ 'ब्रह्मणो मनीषां वेदोक्तानि कर्माणि'-इति वि०।

¶ 'गोपतिं यजमानं दक्षिणामन्वन्वेन प्रच्छमाना इव, वृषभं वा' इति वि०।

§ मतय इति स्तोतृनामसु न दृश्यते पर मेधावि-नामसु द्वाविंशतितमं घष्ट्क-मिति लभ्यते (३,१५)। 'मतयः बुद्धयः'-इति वि०।

‖ यास्कव्याख्यानमित्थम् -"वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्यस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येव एवैतत् सर्वमक्षरमधीत्यधिदैवतम् अथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमता मृतस्यात्मनः कर्माणि ब्रह्मणो मतान्यथेवैतत् सर्वमनुभवत्यात्मगति माचष्टे"-इति (प०१,१४)॥ विवरणकारस्तु पूर्वं यथावत् व्याख्यायानन्तरमपरमपि व्याख्यानजातमाविस्तृतवान् तद्यथा—'यद्यपि पावमानीषु सोममुक्त्वा अन्या देवता न सम्भवति तथाप्यादृशो व्याख्यातेति कृत्वा तेनापि आत्मनानुस्मरणार्थं मालिख्यत। तिस्रो वाचः। ऋग्यजुःसामानि अथवा तिस्रो वाचः सत्वरजस्तमांसि अथवा आपत्स्वप्नसुषुप्तिलक्षणः। ईरयति प्रेरयति उदकरश्मींश्च वहतीति वह्निरादित्यः। अतस्य आदित्यस्य

अथ चतुर्थी।

३ १ २ ३ १ ३ १ २ ३ १ १ १ २ ३ २ ३ १ २ ३ १ २
अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम्।
३ १ २ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ १ २
सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमन्ति होता॥४॥६०॥*

(अगस्त्यस्य यमिके द्वे ॥) अस्या३४औहोवा। प्रेषा। हेइ
मना। पूयमानाः। उहुवाइ। अस्या३४औहोवा।
प्रेषा। हेइमना। पूयमानाः। हाइ। उहुवा।
देवा३४औहोवा। देवाइ। भीइःसम। पृक्तरसाम्।

धीतिः। अथवा ऋतस्य सत्यस्य यज्ञस्य। अथवा ऋतस्य धीतिं यज्ञस्य वा आदित्यस्य वा पथ इव 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते'। 'मधुनो मभीषा गावः रश्मयः तेन विवृद्धा अथवा उदकानि। एतमेव गोपतिं रश्मि-स्वामिनं वा पृच्छन्त इव सोमं यन्ति पृथवो बलाका सर्वोपकाराय सोमं आदित्यं सततः। प्रख्यायते विषयाः अतिप्रकाशन इति रश्मयः। वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मं वह्निरात्मा भवति। वह्न्यादिगुणसंयोगात्। सः तिस्रो वाचः प्रेरयति। तिस्रः बुद्धिमनांसि। तिस्रः महान्। बुद्धिरहङ्कारः मन इति प्राधान्याद् भूतेन्द्रियाणि ऋतस्यात्मनः धीतिं मनसः स्थानि कर्माणि प्रेरयन्ति ऋतस्य आत्मनः। गोपाः गोपायति। आत्मानं इन्द्रियाणि स्वामिनं पृच्छमानाः। आत्मानं मदभिप्रायेण स्वाध्यायमनुसमाना। एतमेवात्मानं सोमं कामयमाना इव यन्ति न भूयः तदर्थं प्रादुर्भवन्ति' इति।

* ऋ० ९, ९, ८, १ = ऋ० ७, ४, ११, १ = अथर्व० ...

२ १२ ३र ४र ५ १ २ १
हाउ। होइ। सुता३४औहोवा। पवाइ। आ३म्परि।
२ १ ४ ५ २ र १ २ ३र ४र ५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ १ २ ४ ५ १ २ २ ४
आ३पशु। मन्तिहोता। पशु। मा३४३। ती३होपू
ताई५६ ॥ ४ ॥

१र २र ३र २ १ ३ २ १ र १ २र
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
२ १ ४ ५ २र १र र ? १ २ ३ ४ ५
पूयमानाः। देवोदेवाइ। भी३:सम। पृक्तरसाम्।
२ १ ? १ २ ३ ४ ५ १र २र ३र २
सुतःपवाइ। आ३म्परि। एतिरेभान्। औहोवाहा-
१ १ २ १र २ १ २
३होइ। इहा। मितेवसा। आ३पशू। मा३४३।
२ ४
ती३होपुताई५६ ॥ ५ ॥ ६०

वसिष्ठऋषिः*। "अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः (भ्वा० प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं† प्रेषा] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमानः" हिरण्य-

* "मैत्रावरुणः"-इति ऋषि-नै०।

† "सावेकाचस्तृतीयादिर्विभक्तिः"-इति पा० ६, १, १६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ वाछन्दसकादल्लोपाभावः।

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २
सोमःपवतेजनितामतीनाञ्जनितादिवोजनितापृथिव्याः।
७ १र २र ३ १र २र ३ १ २ ३ १र २र
जनिताग्नेर्जनितासूर्यस्यजनितेन्द्रस्यजनितोतविष्णोः॥५॥६१*

२र र र १
(कालकाकन्दो॥) सोमःपवतेजनितामा३ताइना २म्।
र र र १ १२र र
जनितादिवोजनितापृ३थाइव्या २ः। जनिताग्नेर्जनितासू।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः "देवः" दीप्यमानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति। [पृची सम्पर्के (अदा० आ० ] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं‡ "पर्येति" परिगच्छति। कथमिव? "होता" देवानामाह्वाता¶ ऋत्विक् "मितेव" निर्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्येति तद्वत् ॥ ४ ॥ ६०

---

* उ० ७, १, १९, १ = ऋ० ७, ४, ९, ५ = कण्ड ३, २, १९;—८, २, १;—१२, १, १०—१६।

† 'देवेभिः देवेभ्यः यज्ञादिभ्यः'-इति वि०।

‡ दशापवित्रमित्यर्थः।

¶ होतेति ऋक्श्लोकपम् (६, ७, ३४ पा०)।

§ 'मिता कर्त्ता' इति वि०।

रियार३स्या। जनितेन्द्रा। स्याऽ३जनि। ता३४३। तार

वा५इष्णो६५६ः॥ ६॥

सोमःपवतेजनिता। ए३। औ३हो५वाऽ। माता

२३४५इना६५६म्। जनितादिवोजनितापृथिव्याः। जना-

२इता२३४ग्नेः। जनिता। सू३४३। री३या५स्या६५६।

जनितेन्द्रस्यजनितातविष्णोर२३४५ः॥ ७॥

(जनित्रे द्वे॥) हाउजनत्। ३। जनद्धाउ। ३।

होइ। जनत्। २। होइ। जनात्। सोमःपवा। ते३

जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ

थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ

जनत्। ३। जनद्धाउ। ३। होइ। जनत्। २। होइ।

जनात्। जनितेन्द्रा। स्या३जनि। ता३४३। ता३वा

५इष्णो६५६ः॥ ८॥

४ ५　　　४ ५　　　१

जनद्वाउ। ३। जनदाउ। ३। जनत्। चोइ। ३।

२र १　　२ १　　२ ३ ४ ५　　२ १र

सोमःपवा। ते३जनि। तामतीनाम्। जनिताद्दाइ।

२ १　　२ ३ ४ ५　　२ १र　　२१र२ ३ ४ ५

वो३जनि। तापृथिव्याः। जनिताग्नाइ। जनितासूरियस्या।

४ ५　　४ ५　　१　　र　　१

जनद्वाउ। ३। जनदाउ। ३। जनत्। चोयि। ३। जनि-

१ र　　२ १　　२　　२ ४

तेन्द्रा। स्या३जनि। ता३४३। ता३वापुयिष्णो६५६:

॥ ९॥ ६१

प्रतर्दनऋषिः*। "सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति। कीदृशः? "मतीनां" बुद्धीनां। यद्वा। मननीयानां स्तुतीनां "जनिता" जनयिता† [ "जनिता मन्त्रे" (६,४,५३) इति निपातेन णि-लोपः] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता। तथा "पृथिव्याः जनिता"। "अग्नेः" "जनिता"

* "दैवोदासिः" इति वि०।

† एवेदं विवरणम्—'सोमः पवते। विनियोगोऽस्य चतुर्थेऽहनि। अभिषूयमाणः पवते सोमस्य पृथिव्यादीनां। जनयितृत्वं न सम्भवति। यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेः जनयिता सूर्यस्य जनयिता। इन्द्रस्य जनयिता। उत अपि विष्णोर्व्याप्तिमत इति। जनयिता पृथिव्यादिभ्यः रसेन वर्द्धयिता। अधिदैवतेनेन्द्रः सोमः यदात्मनि तदायमर्थः। सर्वमिदं जयति। आत्मा सोमः पवते साधयति भोक्तृत्वात्। आत्मा सत्कारश्च वा। प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च द्वयोर्वचनात्स्थित्याद्यपि अग्न्यादीनाञ्च आत्मनां तिसृणां विष्णोश्च व्याप्तिमतः॥"

अथ षष्ठी।

३१ २३१२ ३२ ३१ २ ३१२ ३१२
अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिण॰मवावशन्तवाणीः।
३१२ ३१२३ २उ ३ १२ ३१२ ३१२
वनावसानोवरुणोनसिन्धु†र्विरत्नधादयतेवार्याणि॥ ६॥६२॥‡

२ १ ५ १ ५२ २
(अङ्गिरसां व्रतोपोह्यः॥) ओ३हायि। ओ३हा। ओहा।
१ ५ २ २ १ २ १ २१
हुया२। ओ३हा३ए। अभित्रिपा। ष्ठा३०वृष। णंव-
४ ५ २ १२ २ १२ १ २ ४ ५
योधाम्। अङ्गोषिणाम्। अवाव। शन्तवाणीः।
२१२ २ १ ० ३ ४ ५ २ १ १ २
वनावसा। नो३वरुणोनसिन्धूः। ओ३हायि। ओ३-
५२ २ १ ५२ २ २ १
हा। ओहा। हुया२१। ओ३हा३ए। विरत्नधाः।
२१२ २ २ ४ ५
दयते। वा३४३। यो३याश्रुणाई५ईयि॥ १०॥ ६२

प्रकाशयिता। "सूर्य्यस्य" सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता। "उत" अपि च। "विष्णोः" व्यापकस्य "जनिता" जनयिता¶। एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्यायन्त इति॥ ५॥ ६१

---

* "वावशाना"-इति, † "सिन्धू न"-इति च } ऋ०।

‡ उ० ६, २, ११, १=ऋ० ७, ३, २६, २= ऋवे ९, ९, ९०।

¶ तथाच यास्कः—"सोमः पवते सोमः सूर्यः प्रसवनात् जनिता मतीनां प्रकाशकर्मणां आदित्यरश्मीनां दिवो द्योतनकर्मणां आदित्यरश्मीनां पृथिव्याः प्रथनकर्मणः

अथ सप्तमी ।

१ २　　३१ २ ३ १र २र ३ १ २ ३ १र २र　　१ २
अक्रान्त्समुद्रःप्रथमेविधर्मञ्जनयन्प्रजाभुवनस्यगोपाः* ।

वसिष्ठऋषिः† । "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादिस्थानानि सवनानि वा यस्य स तथोक्तस्तम् । "वृषणं" वर्षकम् । "वयोधाम्" अन्नस्य दातारम्‡ । "अङ्गोषिणं" आघोषन्तं सोमं¶ "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा । "वना" वनानि उदकानि "वसानः" । आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धुः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत् । "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि|| "दयते" स्तोतृभ्यः प्रयच्छति ॥ ६० ॥ ई२

मादित्यरश्मीनां, सूर्यस्य लोकत्रयकर्मणामादित्यरश्मीनां, विष्णोर्वाग्निकर्मणां आदित्यरश्मीनामित्यधिदैवतम् । अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपिवा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगतिमाचष्टे"—इति प० १, ११ ।

* "भुवनस्यराजा"—इति ऋ० ।

† "मैत्रावरुणः"—इति ऋषि मै० ।

‡ "सुनः", "सुतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् मन्नमेवपठ्यन्ते न त्वयन्ते (२, ७) । 'वयोधा मन्नानां धातारं यशस्विनं वा'—इति वि० ।

¶ "आङ्गूषस्तोमआघोषः "एमाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्रवन्तः"—इत्यादि नि० ५, ११ ।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४ ।

|| 'वार्याणि वननीयानि धनानि'—इति वि० ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
वृषापवित्रे अधिसानो अव्येबृहत्सोमोवावृधेस्वानो*-

३१ २
अद्रिः ॥ ७ ॥६३†

(सन्यावैयश्वम् ॥)हो। होपि। अक्रांत्समुद्रः प्रथमेविधामान्।
होहोयि। जनयन् प्रजाभुवनस्यगोपाः। हो। होयि वृ
षापवित्रे अधिसाने२अ। व्यायि। हो। हो। वृह
त्सोमेरवावृधेस्वाने३अ। द्रा। औ३। होवाहाउवा
३। ए३। स्वाना३अ। द्री२३४५ः॥ ११ ॥ ६३

. पराशरऋषिः‡। "समुद्रः" अस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य" उदकस्य¶ "विधर्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन् "अक्रान्" सर्व्वमतिक्रामति [क्रमते-र्लुङि, तिपि, इड़भावे हलो च क्तातायां सिज्लोपे मकारस्य

* "स्वान"—इति क०।

† ऋ० ५, १, १, १=श्र० ७, ४, १८, प= ऋचे १७, २, १;—१९, २, ५—८—९; ऊहे६, २, ५।

‡ "शाक्त्यः"—इति ऋषि-मं०।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् (१,१२)।

४ ५ १ १ र १
(सामसामनि द्वे॥) कानी। क्रान्तो२क्रान्तो२। हरिराहृज्य-
२ ४ ५ १ र १ र
मा२३ना३ः। सायिदान्। वाना२वाना२। स्यजठरेपुना२३-
२ ४ ५ १ १ र १ र
ना३ः। इभीः। याता२याता२ः। क्रणुतेनिरिर्णिजा२३-
१ ४ ५ १ १ १ १ २
गा३म्। आताः। माती२म्माती२म्। जनयता२३स्वा२स्वा
५ र र २ १ १ १ १
२३४औहोवा। भो२३४५ः॥ १२ ॥
३ ४ ५ र र २ ३र ३ २ ३ ५
कनिक्रन्तिहा। होयि। हरिराहृज्य। मा२३४ना।
१र १ र र २ १ २ २र १
हाहोयि। सोदन्वनस्यजठरेपुना२३नाः। हाहोयि। नृभि
र २ १ २ र १ र
र्यतःकुणुते निर्णिजा२३ङ्गाम्। हाहोयि। अतोमतायिम्
७ १ २ ५र र २ १ १ १ १
जनयता२३। स्वा२धा२३४औहोवा। भो२३४५ः॥१३॥६४

प्रस्कण्वऋषिः*। "सृज्यमानः" आ समन्ताद्विसृज्यमानोऽभिषूयमाणः† "हरिः" हरितवर्णः सोमः "कनिक्रन्ति" पुनः पुनः शब्दायते [क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, "दाधर्त्तिदर्धर्त्ती त्यादिना‡ निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः¶ ]

* "काण्वः"-इति ऋषि-मं०।

† 'सूयमानः संसूयमानः'-इति वि०।

‡ "दाधर्त्तिदर्धर्त्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत् कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च" —इति पा० ७, ४, ६५।

¶ "अभ्यस्तानामादिः"-इति पा० ६, १, १८९।

अथ नवमी ।

२ २उ ३ १ २　　३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
एषस्यतेमधुमाॅइन्द्रसोमोवृषावृष्णःपरिपवित्रेअक्षाः ।
३ १ २ ३ १ २ ३ २ ३ १ २　३ २ ३ उ ३क २र
सहस्रदाःशतदाभूरिदावाशश्वत्तमम्बर्हिरावाज्यस्थात् ॥ ८ ॥ ६५ *

४ ५ ४ ५　२ २　४ ५ र　४र ५
(ऐषम् ॥) एषाएषाः । स्यता३१२३४यि । मधुमाॅइन्द्रसोमः ।
र　२ २　५ ४ ५र र
वृषावृषाई२ । वृष्णा३१२३४ः । परिपवित्रेअक्षाः । सहस्रहा
५ २ २　५ ४र ५　४र ५र　५
ई२ । स्रदा३१२३४ः । शतदाभूरिदावा । शश्वत्तस्माई२ ।
१ २　र ५र ४ ५　५　५
तमा३१२३४म् । बर्हिरावाजिपे । स्थियाई२हाउवा स्था२
१ १ १ १
२३४५त् ॥ १४ ॥ ६५

तथा "पुनानः" पूयमानः "वनस्य" वननीयस्य चास्य द्रोण-कल-शस्य "जठरे" "सीदन्" उपविशन् शब्दायते । किञ्च "नृभिः" कर्मनेतृभिर्ऋत्विग्भिः "यतः" संयतः सोमः "गाः" गो-विकारान् क्षीरादीन् आच्छादयन् "निर्णिजं" शुभ्रम् आत्मनोरूपं † "कृणुते" ग्रहादिषु करोति । अतोऽस्मै सोमाय "मतिं" मननीयां स्तुतिं "स्वधाभिः" हविर्भिः सह "जनयत" स्तोतारोऽजनयन् [ अत्याम्नादिशाभावः छान्दसः । अदादेशः ] यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत् ॥ ८ ॥ ६४

---

* ऋ० ७, १, ११, ४ ।

† "निर्णिक्"-इति रूपनामसु प्रथमं नैघण्टुकम् (३, ७) ।

अथ दशमी।

१२ ३१२ ३२ ३१२ १२३ २ ३२३ १ २

पवस्वसोममधुमाꣳऋतावापोवसानोअधिसानोअव्ये।

३१ २ ३१२ ३ १ १ ३१२३

अवद्रोणानिघृतवन्ति*रोहमदिन्तमोमत्सरइन्द्र-

१ २

पानः ॥ १० ॥ ६६†

॥ इति चतुर्थ-दशति ॥ ४ ॥

उशना ऋषिः‡। हे इन्द्र! "वृष्णः" वर्षकस्य "ते" तुभ्यं [चतुर्थ्यर्थे षष्ठी¶] "एषः" "स्यः§" स सोमः "मधुमान्" माधुर्योपेतः "वृषा" वर्षकः "पवित्रे" "पर्यक्षाः" पर्यस्रवत् [क्षरतेर्लुङि रूपम्] स एव "सहस्रदाः" सहस्रसङ्ख्याकस्य धनस्य दाता "शतदाः" शतसङ्ख्याकस्य दाता "भूरिदावा"‖ ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः "शश्वत्तमम्" अतिशयेन पुराणं "बर्हिः" यज्ञम् "अस्थात्" अधितिष्ठति ॥

"वृषा वृष्णः"-"वृषा वृष्ण"—इति, "सहस्रसाः"-"शतसाः" इति च साम्नऋचः पाठाः ॥ ८ ॥ ६५

* "घृतवन्ति"—इति ऋ०।

† ऋ० ७, ४, ८, २।

‡ "काव्यः"—इति ऋषि-जे०।

¶ "षष्ठ्यर्थे चतुर्थीति वाच्यम् (२, ३, ६२)"—इति कात्यायनवचनादित्यर्थः।

§ "स्यश्छन्दसि बहुलम् (पा० ६, १, १३३)"—इतीह लभ्ये स इत्यत्र सोर्लोपः।

‖ "आतो मनिन्क्वनिब्वनिपश्च (पा० ३, २, ७४)"—इति वनिपि रूपम्।

(माधुच्छन्दसम्॥) हाओ२३४वाइ। इडा३१। पवस्वसो। मा३मधु। मा२ऋतावा। अपोवसा। नो३अधि। सानोअव्याइ। अवद्रोणा। नी३घृत। वन्तिरोहा। हाओ२३४वाइ। इडा३१। मदिन्तमो। मत्सरः। आ३४३इ। द्रा३पा५नाई५६ः॥ १५॥ ६६

प्रतर्दनऋषिः*। हे "सोम!" "मधुमान्" [ मत्वर्थीयः ] तादृशस्त्वं "अपः" वसतीवरीः एकधनाः "वसानः" आच्छादयन् "अधि" अधिकं "सानो" समुच्छ्रिते "अव्ये" अविभवे पवित्रे "पवस्व" क्षर। ततः "मदिन्तमः" अतिशयेन मदकरः "इन्द्रपानः" इन्द्रेण पातव्यः "मत्सरः" मादयिता सोमः "घृतवन्ति" उदकवतः† "द्रोणानि" द्रोणकलशान् "अवरोह" प्रादुर्भवसि॥

"रोह"-"सीद"—इति पाठौ। १०॥६६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य षष्ठः खण्डः॥६॥

---

* "दिवोदासिः"—इति ऋषि-सं०।

† "घृतम्"—इत्युदकनामसु इदकं नैघण्टुकम् (१, १२)।

अथ सप्तमे खण्डे--

सैषा प्रथमा।

१ २ ३ १र २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रसेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना।
३ २ ३ १ २ ३ १र ३र ३ २उ ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि-

दत्ते॥ १॥ ६७*

(कुत्सस्याधिरथीयानि त्रीणि॥) हो४वा। उहुवा

४ ५ २ १र २र १ र र २ २ ४
३। होवा। प्रसेनानाइः। शूरोआ३। अग्राइरथा
५ २ १ २र १ २ २ ३ ४ ५ २ १र
नाम्। गव्यन्नेताइ। हर्षताइइ। अस्यसेना। भद्रा
१ १ २ २ २ ४ ५ २र १र २र १
न्कृण्वान्। इन्द्रहा३। वान्त्सखिभ्याः। आसोमोवा।
२ १ २र ३ ४ ५ २ ५ २ २ ४
स्त्राइरभ। सानिदत्ताइ। हो४वा। उहुवा३। हो
५ ५
वा६। हाउवा॥ १६॥

५र ४ ३ १११ १ १र २र १ र र २ २
औहो३वा३४५। प्रसेनानाइः। शूरोआ३। अग्राइ
३४ ५ २ १ १र १ २ १ २ ४ ५
रथानाम्। गव्यन्नेताइ। हर्षताइइ। अस्यसेना।
२ १र २ १ २ २ ३ ४ ५ र ४
भद्रान्कृण्वान्। इन्द्रहा३। वान्त्सखिभ्याः। औहो३

---

* ऋ० ७, ४, ६, १।

२ १११　२र १र २र १　२ १　२　२
वा३४५। आसोमोवा। स्वा३रभ। सा३४३। नी३

४
दा५न्ता६५६इ॥ १७॥

५र४　२ १११　२र२र१　०र र २　२
औहो३वा३४५। प्रसेनानाइः। शूरोआ३। अग्राइ

३४५　३　२र१　२　२३४५
रथानाम्। गव्यन्नेताइ। हर्षता३इ। अस्यसेना।

३र　१ १　२　२ ३४ ५　र४ २
भद्रान्कृण्वान्। इन्द्रहवा३। वांत्सखिभ्याः। औहो३वा

१११　३र र २र १　२ १　२　२ ४
३४५। आसोमोवा। स्वा३रभ। सा३४३। नी३दा५।

२ १११
ता२३४५इ॥ १८॥ ६७

प्रतर्दनऋषिः*। "सेनानीः" सेनाया अग्रे नेता। "शूरः" शत्रूणां बाधकः "सोमः" "गव्यन्"† इच्छन् यजमानानां पश्वादिक मिच्छन् "रथानाम्" "अग्रे" पुरतः "प्रैति" प्रकर्षेण गच्छति। "अस्य" सोमस्य "सेना" च "हर्षते" हृष्यति [वाक्यभेदादनिघातः] किञ्च "सखिभ्यः" समानख्यानेभ्यो यजमानेभ्यः "इन्द्रहवान्" तैः कृतानि इन्द्रस्य आह्वानानि "भद्रान्" कल्याणानि यथार्थानि "कृण्वन्"। आहूतो हीन्द्रः सोमं पीत्वा

* "दैवोदासिः"—इति ऋषि-नि०।

† "छन्दसि परेच्छायामपि क्यच् वक्तव्यः"—इति तृतीयाध्यायीय-कात्यायन-वचनादिह क्यचि रूपम्।

अथ द्वितीया।

२ ३ १ ३ १ २   १ २ ३ १ ३ १ ३ १ २र १र
२ प्रतेधारामधुमतीरसृग्रन्वारंयत्पूतोअत्येष्यव्यम्।
१ २ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ २ ३ २
पवमानपवसेधामगोनाञ्जनयंत्सूर्यमापिन्वोअर्कैः ॥२॥९८*

२र र १
(वैयश्वज्योतिषाणि त्रीणि ॥) हाउहोवा३हाइ।
र र र १ ७ १ १ १ १ २र र १
प्रतेधारामधुमा३ताइरसृग्रा२३४५न्। हाउहोवा३हाइ।
र र र १ ७ १ १ १ १ २र र
वारंयत्पूतोअती३याइषिआव्या२३४५म्। हाउहोवा३
१ र २र १ ७ १ १ १ १ २र र
हाइ। पवमानपवसे३धामगोना२३४५म्। हाउहोवा

कामान् प्रयच्छतीति। "रभसानि" इन्द्रस्य वेगेनागमननिमित्तानि "वस्त्रा" वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि "आ दत्ते" आ गृह्णाति† ॥ १ ॥ ९७

* ऋ० ७, ४, १७, १।

† अस्य विवरणं यथा—"प्रसेनानीः। सेनां नयति इति सेनानीः। शूरः विक्रान्तः। अग्रे रथानां ये देवरथाः गव्यन् इच्छन्। धनं पृथिव्यां भवं प्रैति प्रयाति। हर्षन्ति अस्य सेना भद्रान् मन्दवीर्याणि। कुर्वन् आयन्। इन्द्रवान् इन्द्रियाणि। सखिभ्यः ऋत्विग्भ्यः। एवं युक्तविशिष्टः। सोमः वस्त्राणि रभसानि पततानि। आदत्ते परकेभ्यः। अथवा सेनानीः इन्द्रः शूरः विक्रान्तः। अग्रे पुरतः देवरथानां गव्यन्। पृथिव्यां भवन्नम्। राति प्रक्रान्ति ददाति सैन्येभ्यः सोमरव रजोम् वस्त्राणि सैन्येभ्यो ददाति॥"—इति॥

अथ तृतीया ।

१ २　३क २र　३ १र　२र　३ १र २र
प्रगायताभ्यर्चामदेवान्त्सोमꣳहिनोतमहतेधनाय ।
३ १ २　३ २ ३ २ ३ २ ३ १ २　३ १ २ ३ १ २र
स्वादुःपवतामतिवारमव्यमासीदतुकलशन्देवइन्दुः॥१॥६८*

२　र　१　७र　१ १ १ १　२र
इहाइ । जनयंत्सूर्यमा२पाइन वोअर्का३२३४५इ: । हाउ
र　२　१ १ १ १
वोवा३हाउ । वा३४५ ॥ १८ ॥ ६८

पराशरऋषिः† । तदा प्रसृज्यन्ते "यद्" यदा "पूतः" वसतीवरीभिस्त्वं "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि" अतीत्य गच्छसि । किञ्च हे "पवमान" शोध्यमान सोम! "गोनाम्‡" गवां¶ "धाम" धीयते पीयत इति धाम पयः तत् वसतीकृत्य "पवसे" चरसि । ततः "जनयन्" आयमानस्त्वं "अर्कः" अर्चनीयैः स्व-तेजोभिः "सूर्यम्" आदित्यम् "अपिन्वः" पूरयसि ॥

"वारं यत्पूतोअत्येष्यव्यम्"-"वाराण्यपूतो अत्येष्यव्यान्"—इति, "जनयन्"-"जज्ञानः"—इति च साम्नऋचः पाठो ॥ २ ॥ ६८

* ऋ० ७, ४, ११, ४ ।
† "शाक्तः"—इति ऋषि-सं० ।
‡ "गोः पादान्ते (७, १, ५७)"—इति मिड गोनामिति ।
¶ 'गवां एष्णोगा महत्वानां वा'—इति वि० ।

२ १र २ १ १ २ ३ ४ ५ २र १
प्रगायता। अभिय। चामदेवान्। सोमꣳ-
२ १ १ २ ३ ४ ५ १र १ २
हिनो। ता३मह। तेधनाया। स्वादुःपवा। ता३
१ २ ३ ४ ५ २र १र २ १ २
मति। वारमव्याम्। आसीदतु। कलशम्। दा-
२ ४
३४३इ। वा३आ५इन्दूई५ईः॥ २०॥ ६९

इन्द्रप्रमतिर्वासिष्ठऋषिः। हे स्तोतारः! "प्रगायत" 'सोमं' प्रकर्षेणाभिष्टुत। वयन्तु "देवान्" "अभ्यर्चामः" अभिष्टुमः*। यद्वा। देवानभ्यर्चामोऽभ्यर्चत [ पुरुष-व्यत्ययः] । किञ्च। "महते" महत् प्रभुतं धनाय धनं प्राप्तुं सोमं "हिनोत"† अभिषवार्थं प्रेरयत [ क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२,३,१४,)-इति धन-शब्दस्य चतुर्थी ] ततः "स्वादुः" मधुरः सोमः "अव्यम्" अविमयं "वारं" वालं पवित्रम् "अतिपवताम्" अतीत्य क्षरतु। "देवः" द्योतमानः। सोमः "इन्दुः" दीप्तः सन् "कलशं" द्रोणम् "अति आसीदतु" आभिमुख्येन तिष्ठतु॥

"पवतां"-"पवाते"—इति, "देवइन्दुः"-"देवयुर्न"—इति साम्नऋचः पाठौ॥ २॥ ६९

* 'सोमरसैव'—इति वि०।

† "ममनमनमनाच (७, १, ४५ पा० )"—इति नपि सिद्धं हिनोतेति।

अथ चतुर्थी ।

१ २ ३ १ २ ३ १र २र ३ २ ३ १र २र ३ १ २
प्रहिन्वानोजनितारोदस्योरथोनवाजꣳसनिषन्नयासीत् ।
३ १ २ १ २ ३ १ २ ३ २ ३ १ २ १ २ ३ १
इन्द्रङ्गच्छन्नायुधासꣳशिशानोविश्वावसुर्हस्तयोराद-
२
धानः ॥ ४ ॥७०*

१र २ २ २ २ २ १ २र ४र
हाउहोवा३हाइ । प्रहिन्वानोजनितारो३४३दसीयोः ।
१र २ २ २ २ १ २र ४र
हाउहोवा३हाइ । रथोनवाजꣳमनिषा३४३नयासीत् ।
२र २ २ २ २ १ २र ५
हाउहोवा३हाइ । इन्द्रङ्गच्छन्नायुधासा३४३ꣳशिशानः ।
२र २ २ २ २ १ २र ५ ४
हाउहोवा३हाइ । विश्वावसुर्हस्तयोरा३४३दधानः । इधा
पुनाउ । वा ॥ २१ ॥ ७०

वसिष्ठऋषिः† । "प्रहिन्वानः" अध्वर्युभिः प्रेर्यमाणः‡ "जनिता"¶ उत्पादयिता "रोदस्योः" द्यावापृथिव्योः§ तयोर्जनयितृत्वं वृष्टिप्रदान-हविः-प्रापणाभ्याम् । तादृक सोमो "वाजम्" अन्नं "सनिष्यन्" दास्यन्‖ "प्रायासीत्" प्रगच्छति ।

---

* ऋ० ७, २, २९, १ ।    † "मित्रावरुणः"--इति ऋषि-नि० ।

‡ 'प्रीणानः अथवा वा'—इति वि० ।

¶ "जनिता मन्त्रे (६,४,५३)"—इति पा० ।

§ "रोदसी"—इति द्यावापृथिव्यौ नामसु चतुर्थं संधषटकम (१, १०)।

‖ 'सनिष्यन् सम्भजमानः'—इति वि० ।

अथ पञ्चमी।

२ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १र २र
तद्वद्यदीमनसोवेनतोवाग्ज्येष्ठस्यधर्मंद्युक्षोरनीके।
१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ २ ३ २ ३ १ २
आदीमायन्वरमावावशानाजुष्टम्पतिङ्कलशमावइन्दुम्॥७१

२ ४ ५र २ १ १ १ १ २ ४
(वाभ्रःसामनी द्वे)॥ तद्वद्यदी। होऽ२३४५इ। मन-
र २र ४ ५ २ १ १ १ १ २र ४ ५ ३ १ १ १ १
सोवेनतः। वाऽ२३४५क्। ज्येष्ठस्यधा। होऽ२३४५।
४ २र ४ ५र २ १ १ ११ ३र ४र ५र ३ १ १ १ १
मन्द्युक्षोरनी। काऽ२३४५इ। आदीमायन्। होऽ२३४५इ।
२ ४ २र ४र ५ र २ १ १ १ १ २ ४ ५ ३ १ १ १ १
वरमावावशा। नाऽ२३४५ः। जुष्टम्पतिम्। होऽ२३३५इ।
४ र
कलशेगाऽ५वः। इ। दाउ। वा॥ २२॥
२ १ २ २ ४ र २र ४ ५ २ १ १ १ १
तद्वद्यदाऽ३१२३४इ। मनसोवेनतः। वाऽ२३४५क्।
२र १ २ ३र ४ ५र २ १ १ १ १ २र १
ज्येष्ठस्यधाऽ३१२३४। मन्द्युक्षोरनी। काऽ२३४५इ। आदा-

"इन्द्रकृण्वन्" प्राप्नुवन् "आयुधा" "आयुधानि" "संशिशानः" सम्यक् तीक्ष्णीकुर्व्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् "विश्वा"† सर्व्वाणि "वसु"‡ वसूनि धनानि "हस्तयोरादधानः" अस्मभ्यन्दानाय एवं कुर्व्वन् प्रायासीत्॥ ४॥ ७०

* ऋ० ७, ४, ११, २।

†,‡ 'विश्वा'—इति सुप आले, 'वसु'—इति सुपो लुकि च रूपम् (७, १, ३९)।

२　　　　　३ ४ ३र ४र ५ र　　　 ५ ११११　　　 ११
इमायाइ१२३४न् । वरमावावशा । नार२३४५ः । जुष्ट-

२　　　　　　　　र
मप्ताइ१२३४इम् । कलशेगाप्ववः । इ । दाउ । वा ।
॥ २३ ॥ ७१

मृडीको वासिष्ठऋषिः । "वेनतः" [वेनो वेनतेः कान्ति-कर्म्मणः ( १०,४,३८ )"—इति यास्कः] कामयमानस्य "मनसः" [मनो मन्यतेः स्तुतिकर्म्मणः*] स्तोतुः "वाक्" स्तुतिलक्षणा† यद्येनं "तक्षत्" संस्करोति‡ । "धर्म्मन्" धारके¶ यज्ञे "ज्येष्ठस्य" प्रशस्यस्य "वृक्णोः" दीप्त-स्तुतिकस्य [टुक्षु शब्दे (भ०प०) इत्यस्मात् कु-प्रत्ययः] सवनस्य "अनीके" प्रमुखे यदा यज्ञेषु सवन-मुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । "आ" अनन्तरमेव "वरं" वरणीयं "जुष्टं" देवानां मदाय पर्याप्तं "पतिं" सर्वस्य पालकं "कलशे" स्थितं "इन्दुम्" "ईम्" एनं सोमं "वावशानाः" कामयमानाः "गावः" "आयन्" पयसा श्रयेण मिश्रयितु मागच्छन्ति ॥

"धर्म्मन्"-"धर्म्मणि"—इति पाठौ ॥ ५ ॥ ७१

* "मन्यते"—इति स्तुति-कर्मसु चतुर्विंशतौ पठितम् ( ३, १४ ) ।

† 'वाक् स्तुतिलक्षणा'—इति वि० ।

‡ 'तक्षत् करोति'—इत्येव वि० ।

¶ धारणार्थ-धृ-धातोः कर्त्तरि मनिनि धर्म्मन्निति, ततस्सप्तम्या-लुकि रूपम् ।

अथ षष्ठी।

२ ११ ३१२ ३२३१२ ३२३ १२
साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः।
३११ ३१२ ३२३१ २ ३१३२३ २
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ६॥७२*

४ ५ १ २ २१
(दाशस्पत्ये द्वे ॥) साकाम्। उक्षोमर्जयन्त। स्वसा
२ १ १२ २२१ २ १
२३राः। दाशा२। धीरस्यधीतयोधनू२३त्रीः। हारी
१ २ ७ २ १ १
२ः। पर्यद्रवज्जाःसूरिया२३स्या। द्रोणा२म्। नन-
२ २ २ ११११
क्षेअत्योनवा२३। हाउवा३। जी२३४५॥२४॥
५२ ५ २ ५ ४ ५२
साकमुक्षा६ए। ए३१२३४। मर्ज्जयन्तस्वसारः।
२ ५ २ ५२४ ५२ ४ ५ ४ ५
दशधीरा६ए। ए३१२३४। स्यधीतयोधनुत्रीः। हरिः
५ २ ५ ४२ २५ २ ५
पर्या६ए। ए३१२३४। द्रवज्जाःसूर्यस्य। द्रोणन्नना६ए।
२ २ ५२४ ५ ५ ३ ११११
ए३१२३४। क्षेअत्योनवाई। हाउवा। जी२३४५॥२५॥७२

* ऋ० ९,२,१४,१ = ऋ० ७,४,१,१ = अथ ८,१,७ - १२,१,९ - १८,२,४।

अथ सप्तमी ।

३ १ २   ३ १२ ३२ ३ १ २ ३ २ ३ २ ३१र २र
अधियदस्मिन्वाजिनीवशुभस्पर्द्धन्तेधियःसूरेनविशः ।
३ १ २ ३ १२ ३ १ २   ३ १र २र ३ १ २   ३ १ २
अपोवृणानःपवतेकवीयान्व्रजन्नपशुवर्द्धनायमन्म ॥ ७ ॥७२*

नोधा ऋषिः†। "साकमुक्षः" [ उक्ष सेचने ( भ्वा० प० ) क्विपि रूपम् ] तादृश्यः "स्वसारः" कर्म्म-करणार्थ मितस्ततः सुष्ठु गच्छन्त्यः; अङ्गुलयः¶ "मर्जयन्त" सोमं शोधयन्ति [ मृजू शौचालङ्कारयोः ( चु० उभ० ) ] ताः दशसङ्ख्याकाः "धीतयः" [ अङ्गुलिनामेतत् ( नै० २, ५. ७ ) ] अङ्गुलयः "धीरस्य" समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति§। ततः "हरिः" हरितवर्णः सोमः "सूर्यस्य" "जाः" प्रादुर्भूता जाया दिशस्ताः‖ "पर्यद्रवत्" परितो गच्छति। सूर्यस्य तेजसा हि आविर्भवतीति दिशां तस्य जायात्वम्। "अत्यः" अतनशीलः "वाजो न" अश्व इव स्थितः सोमः "द्रोण" कलशं "ननक्षे" व्याप्नोति [नक्षति-व्याप्ति-कर्मा (नै० २, १८, २) ॥ ६ ॥ ७२

* ऋ० ७, ४, ५, १ ।

† "गोतमः" - इति ऋषि मे० ।

‡ स शब्दोपतापयोः ( भ्वा० प० )- इत्यस्य रूपं स्वमेत्यभिप्रायः ।

¶ "स्वसारः"—इत्यङ्गुलि नामसु चयोदशमम मंपठ्यते ।

§ "याचन्ति"—इति वि० ।

‖ "अपत्यम्"—इति वि० । "जाः"—इत्यपत्यनामसु नवम मंपठ्यते २, २ ।

४ ५ ४ २ ३र १

( कश्यपस्य च शोभनम् ॥ ) अधियदा। स्माइन्वारजि

३र १ १ र १ र १ २ ४ ५

नीरवश्रु। भाः। स्पर्द्धन्तेधियःद्ध। राइनविशाः।

२ १र र ७ २ १

अपोवृणानःपवताइ। कवी२३यान्। व्रजन्न। पा।

२ १ २ २ ४

शुवद्ध। ना३४३। याइमाप्र्म्माई५ई ॥ २६ ॥ ७३

कण्वऋषिः*। "यद्" यदा "अस्मिन्" सोमे "वाजिनीव शुभः"† अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे "सूरे न" सूर्य्ये न यथा सूर्य्ये "विशः" रश्मयः उदिता भवन्ति तदा "धियः" अङ्गुलयः "अधिस्पर्द्धन्ते" अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः "अपः" वसतीवरीः "वृणानः" आच्छादयन् "पवते" पात्रेषु चरति कलशानभिगच्छति। कीदृशः? "कवीयान्" कविरिवाचरन्। यदा। कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—"व्रजं न" "मन्म" मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते॥

"सूर्य्ये"-"सूरे"—इति, "कवीयान्"—"कवीयन्"—इति च साम च्छन्दः पाठः ॥ ७ ॥ ७३

---

* "वीरः"—इति ऋषि० मे०।

† शुभरति शुभ शोभायाम् (भा०वा०)—इत्यस्य रूपम्, विशर्गस्तु न दृश्यते मूले।

अथाष्टमी।

१ १ २ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्दुर्वाजीपवतेगोन्योघाइन्द्रेसोमःसहइन्वन्मदाय।
२ ३ २ ३ १ २ ३ १र २र ३
हन्तिरक्षोबाधतेपर्यरातिं,
१ २ ३ २ ३ १ २ ३ १ २
व*रिवस्कृ†ण्वन्वृजनस्यराजा॥ ८॥ ७४‡

१ १ १ २र
(दाशस्पत्यानि चत्वारि॥) इन्दूऽ३र्वाजो२। पवतेगो-
२ १ ५ १ १
नियोघाः। इन्द्राइसो२३४माः। साहइन्वन्मदाया।
१ ५ १र र २ १ १
हन्ताइरा२३४क्षाः। बाधतेपर्यरातिम्। वराइवा२३४स्कृ।
२ १ १ ५ २ २ ५ ४
ण्वन्वृजाना२३स्या। रा३औवाओ२३४वा। हो५इ।
डा॥ २७॥

४ ५ र ४र ५ र ४र ५ १ ० २
इन्दुर्वाजीपवतौ। हौहोवाहाइ। गोनियोघौ।
२ ५ १ ५र १र ५र १ २ १ २
वाओ२३४वा। इन्द्र२सोमा२ःसहइ। न्वान्मदायौ। वा-
३ ५ १ २ १ २र १र २र १ ० २ २
ओ२३४वा। हन्तिरक्षोबाधते। पार्यरातौ। वाओ-

* "वरातीवं"—इति, † "वरिवःकृ"—इति च क०।
‡ उ० १,२,१०,१ = ऋ० ७,४,१२,५ = अथ ३,९,१५—८,२,५।

५ १ २ १ २ १ ऽ २
२३४वा। वरिवस्कृण्वन्न् जना३। स्या। रा३जीवा-

५ ४
यो२३४वा। द्धो५इ। डा॥२८॥

५ २र र र ४५ २र २
इन्दुरौहोवाहाइयावाजाउ। वा३। हाउवा।

र र १ २ २ १ २
पवतेगोनियोघाउ। वा३। हाउवा। इन्द्राइसोमः।

१ २ २ १ ३ ५र र
सहइन्वाउ। वा३। हाउवा३। मा२दा२३४औहोवा।

५ १ १ १ १ २ १ २ र १ २
या२४५। द्वन्ताइरक्षो०। बाधानाइपाउ। वा३।

२ १ ३ ५र र ३ १ १ १ १ २ १
हाउवा३। यो२रा२३४औहोवा। ती२३४५म्। वरा-

२ १ २ २ १
इवस्कृ। ण्वन्नृजनाउ। वा३। हाउवा३। स्या२-

३ ५र र २ १ ५ १ १
रा२३४औहोवा। जा२३४५॥२८॥

५ र र र र ४ ५ र र
इन्दुर्वाजीपवतेगोनियोघाः। इन्द्रे सोमःसहइन्वन्म-

४ ५ ३र र र ४ ५
दाया। हन्तिरक्षोबाधतेपर्यरातीम्। वरिवस्कृण्वन्नृज-

४ ५   ३र १   ५र र   १   १ १र १ १ १ १ २ १
नश्यराजा । राजा३४औहोवा । ए३ । स्यराजा२३४५

॥ ३० ॥ ७४

## ॥ इति ग्रामे गेये पञ्चदशः प्रपाठकः ॥

मन्युर्वासिष्ठ ऋषिः । "इन्दुः" क्षरणशीलः* "वाजी" बलवान् "गोन्योघाः" गमनशील-नीचीनाग्र-रससङ्घातः† "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन्‡ "सोमः" "मदाय" तस्य मदार्थं "पवते" क्षरति । किञ्च । "रक्षः" रक्षःकुलं "हन्ति" हिनस्ति । किञ्च । "अरातीः" अरातीन्¶ शत्रून् "परिबाधते" परितः संहरति । कीदृशः ? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य§ "राजा" ईश्वरः|| सोम इति ॥ ८ ॥ ७४

---

* अतएव "इन्दुः"—इति उदकनामसु दृश्यते च (नं०१,१२,८२) "उन्देरिच्चादेः—(उ,१)"—इत्युणादिरिन्दुरिति ।

† गो—गमनशीलः, नी—नीचिनः, (नस्य अधः विद्यमानः,) ओघः—रससङ्घातः। "गोनी"-शब्दो गमनशीलार्थेऽपभ्रंश इत्युदाजहार च पञ्चपदी पदकारः ।

‡ "इन्वति"—इति गतिकर्मसु पञ्चदशाधिकशततमं नैघण्टुकम् २,१४ ।

¶ भाष्यकारस्त्वत्र ऋग्वेदीयपाठमनुसृत्य व्याचख्यौ, सामवेदीयपाठस्तु "अरातिम्"—इति ।

§ "वृजनम्"—इति बलनामसु एकविंशतितमं नैघण्टुकम् २,९ ।

|| "राजति"—इति ऐश्वर्यकर्मसु चतुर्थं नैघण्टुकम् २,२१ ।

अथ नवमी ।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अयापवापवस्वैनावसूनिमाꣳश्चत्वइन्दोसरसिप्रधन्व ।
३ २ ३ १ २ ३ २ ३ ३ १ २
ब्रध्नश्चिद्यस्यवातोनजूति
२ ३१ २ ३ १ २ ३ १ २
म्पुरुमेधाश्चि*त्तकवेनरन्धात् ॥ ९ ॥ ७५†

५र ४ ५ ४ ५
(औष्ठानि त्रीणि ॥) औहोवाइ । अयोवाइ ।
१ र र र २ १ २ ५ २ १ २ ५ २
पवापवस्वैनावसू२३नी । औ३होइ । इहा । ई३या ।
र १ र २ १ २ ५ २ २ २
माꣳश्चत्वइन्दोसरसिप्रधार२३न्वा । औ२होइ । इहा ।
५ २ १ र र २ १ २ ५ २ २ २
ई३या । ब्रध्नश्चिद्यंस्यवातोनजू२३तीम् । औ३होइ । इहा ।
५ २ १र र र २ १ २ ५ २
ई३या । पुरुमेधाश्चित्तकवेनरा२३न्धात् । औ३होइ ।
२ २ ५ २ ५र र २ १र३ १
इहा । ई२ । या२३४ । औहोवा । ए३ । दोदिवी१ ॥
॥ १ ॥

५ ४ ५ ४ ५ १ र र २ १ २ र
अयोवाइ । पवोवाइ । पवस्वैनावसू२३नी । इहो

---

* "पुरुमेधश्चि"—इति क० ।

† उ०४,१,११,१ = ऋ० ९,४,११,१ = जवे ९,२,१७—८,२,१०—१३,२,१ ।

१ २ २ १ २ २ १ २
इया३ । ई३या । मा२ऽस्वत्वइन्दोसरसिप्रधा२३न्वा । इ
२ १ २ १ २ २ २ १ २
होइया३ । ई३या । अधश्चिद्यस्यवातानजू२३तीम् ।
२ १ २ १२२ २ २ १ २
इहोइया३ । ई३या । पुरुमेधाश्चित्तकवेनरा२३न्धात् ।
२ १ २ ५२ २ २ २२
इहोइया३ । ई२ । या२३४ । औहोवा । ए३ । ही
१ १ १ १ १
दया२३४५त् ॥ २ ॥

१ १ ५ २ १ ५ २ १२
। हाओ२३४वा । २ । हा३ओ२३४वा । हाउवा । अया-
२ १२ २ २ १२ २२ १ २ १ १ २ १ २
पवापवस्वैनावसूनि । इहइ । हिया२ । इहा । इहा ।
२ १ १२१ २ १ २ १ २ १ १ २
मा२ऽस्वत्वइन्दोसरसिप्रधन्व । इहइ । हिया२ । इहा ।
१ २ १ २ १ २ १२ २२ १ २२ २ २ १
इहा । अधश्चिद्यस्यवातानजूनिम् । इहइ । हिया२ ।
१ २ १ २ २ ३ ५ २ १ ५
इहा । इहा३ । हाओ२३४वा । २ । हा३ओ२३४वा ।
२ १२१२ १ २२१ २२ १ २ १
हाउवा । पुरुमेधाश्चित्तकवेनरन्धात् । इहइ । हिया
१ २ १ २ १ १ १ १
२ । इहा । इहा२३४५ ॥ ३ ॥ ७५

कुत्सऋषिः* । हे सोम ! "अया" अनया "पवा" पवमानया धारया सह "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—पूञ् पवने (क्र्या० उ०) "अन्येभ्योपि दृश्यन्ते (३,२,१०१)"—इति विन् प्रत्ययः । आर्धधातुकलक्षणो गुणः । "सावेकाचः (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्] । तथा हे "इन्द्र" ! त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके† वसतीवर्य्याख्ये कलशे "प्रधन्व" प्रगच्छ‡ । ततः "यस्य" यं "ब्रध्नश्चित्" सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः¶ "वातो न" वात इव "जूतिं" वेगं§ कुर्वन् । किञ्च । "पुरुमेधाश्चित्" बहुविधप्रज्ञ इन्द्रश्च "तकवे" [तकतिर्गतिकर्म्मसु पठितः‖ । अस्मादौणादिक उन् प्रत्ययः येस्येति (२,३,३७) कर्मणि षष्ठी ॥ "न लोकाव्ययेति (२, ३, ६९) षष्ठी-प्रतिषेधश्छान्दसः] सोममभि गच्छता मित्यर्थः ॥

"यस्य"-"यच"—इति, "जूतिं"—"जूनः"-इति,—"नरन्धात्"-"नरन्दात्"—इति च साम्न ऋचः क्रमेण पाठाः ॥ ८ ॥ ७५

---

* "आङ्गिरसः"—इति ऋषि-सै० ।

† "सरः"—इत्युदकनामसु पठितं निघण्टौ सै० १,१२ ।

‡ "धन्वति"—इति गतिकर्मसु चतुःषष्टितमं निघण्टुकम् २,१४ ।

¶ 'ब्रध्नः महान्, सविता वा महान् वा'—इति वि० ।

§ जवतेर्वेगकर्मणः ऊतियूतिजूतीत्यादिना (३,३,९७) निपातनात् जूतिरिति ।

‖ नि० सै० २,१४,६८ ।

अथ दशमी।

३ १र　२र　३ १ २ ३ २ ३ १र　२र　३ १
महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान्।
१ २ ३ २ ३ १ २　३ १र
अदधादिन्द्रे पवमान ओजो
२र ३ २ ३ २　३ १ २
ऽजनयत्सूर्ये ज्योतिरिन्दुः॥ १० ॥ ७६ *

२ र र　१　र
( आत्म् ॥ ) महत्तत्सोमो महिषश्चा३कारा २। अपां
र र　१　र र र　१
यद्गर्भोऽवृणीता३दा३वा २न्। अदधादिन्द्रे पवमाना३ओ
र ५र　१　२　र
जा २ः। अजनयत्सूर्ये३ज्यो२३। तिरिन्द्राउवा३। ए३।
१ २ १र२र१र २ १　१ १ १ १
अजनयत्सूर्यैज्योतिरि। दू२३४५ः॥ ४ ॥ ७६

"पराशर ऋषिः†"। "महिषः" महान्‡ पूज्यो वा "सोमः" "महत्" प्रभूतं¶ "तत्" कर्म "चकार" अकरोत्। किं तत्?

---

* उ० ५,२,१,३ = ऋ० ९,५,१९,१ = ऊहे १७,२,१—२०,७,४—२१,१,८—२१, २,९ = ऊह्ये ६, २,५।

† "पराशरः"—इति ऋषि-नि०।

‡ अत्राह यास्कः—'महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवानामधिपत्यमदधादिन्द्रे पवमान ओजोऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा'—इति नि०प०२,१७।

¶ 'महत समभ्यायम्'—इति वि०।

अथैकादशी।

१ २ ३ १ ३ २ ३ १ ३ २ ३ २ ३ १ २ ३ १ ३ २ २

असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीषा।

३ १ २ ३ २ ३ १ ३

दश स्वसारो अधि सानो

१ २ ३ २ ३ २ ३ १ २ ३ १ २

अव्येमृजन्ति* वह्निꣳ सदनेष्वच्छ॥ ११ ॥ ७७ †

"अपाङ्गर्भः" उदकानां गर्भभूतः‡ जनयितृत्वाज्जन्यत्वाद्वा। स सोमः "देवान्¶" "अवृणीत"§ समभजतेति "यत्" तत् कृतवानिति। किञ्च। "पवमानः" पूयमानः‖ सोमः "ओजः"+ सोमपानजन्यं बलम् "इन्द्रे"÷ "अदधात्" न्यधात् तथा "इन्दुः" सोमः× "सूर्ये"** "ज्योतिः" तेजः†† अजनयत्‡‡॥ १० ॥ ७६

* "अव्ये मृजन्ति"—इति ऋ०।

† ऋ० ७,४,१,१=आरण्ये १,२,२१।

‡ 'अपां यद् गर्भदर्शनमात्र पञ्चानां भूतानां गर्भः'—इति वि०।

¶ 'इन्द्रियाणि'—इति वि०।

§ 'अवृणीत अधिष्ठितवान्'—इति वि०।

‖ 'पूयमानः विषयपमाणेन'—इति वि०।

+ 'ओजः बल मणिमादि'—इति वि०।

÷ 'इन्द्रे आत्मनि'—इति वि०।

× 'ज्योतिरिन्दु रादित्यः अध्यात्मम्'—इति वि०।

** 'सूर्ये सरणशीले'—इति वि०।

†† 'तेजः इन्द्रः'—इति वि०।

‡‡ 'तथाप्योजः—येन दूर्यं पश्यति'—इति वि०।

(वासिष्ठम् ॥) असाव्यौ३हो । जिवाक्का२ । रथ्या इया३४ । था । जा२३४५उ । धियाओ३हो । मनोता२ । प्रथमामा३४ । नो । षा२३४५ । दशाओ३हो । स्वसारा२ः । अधिसानो३४ । अ । व्यार३४५इ । मृजा औ३हो । तिवाक्रो२म् । सदनाइषू३४ । अक्ष्णा२उ । वा३४५ ॥ ५ ॥ ७७

कश्यपऋषिः* । "वक्का" शब्दायमानः [वच परिभाषणे (अदा०प०) वनिप्] तादृशः पवमानः सोमः "आजौ" अजन्ति कर्मार्थं ऋत्विजइति आजिर्यज्ञः तस्मिन् "धिया" कर्मणा स्तोत्रेण वा† साकम् "असर्जि" पात्रेषु सृज्यते‡ । तत्र दृष्टान्तः । "रथ्ये यथा" रथ्ये रथार्हे [आजौ सङ्ग्रामनामैतत्¶ । अजन्ति प्रक्षिपन्त्या युधान्यत्रेति तस्मिन्] अश्वो यथा सृज्यते तद्वत् । कीदृशः ? "मनोता" यस्यां देवानां मनांसि प्रोतानि सा [तथाच ब्राह्मणम्—"तस्यां हि तेषां मनाꣳस्योतानि"—इति] "प्रथमा"

* "मारीचः"—इति ऋषि-नै० ।

† 'धिया प्रज्ञया कर्मणा वा'—इति वि० ।

‡ 'सृज्यताम्'—इति वि० ।

¶ नि० नै० २,१७,८ ।

अथ द्वादशी।

२२ ३१२ २ ३ १ २ ३ १२ ३ १ २ ३ २ ३ १ २
अपामिवेदूर्मयस्ततुराणाःप्रमनीषाईरतेसोममच्छ।
३ २३ १ २३२ ३१२
नमस्यन्तीरुपचयन्तिसञ्चा
२र ३ २ ३ १ २
चविशन्त्युशतीरुशन्तम् ॥ १२ ॥ ७८*

॥ पञ्चमदशति ॥ ॥ अर्द्धः प्रपाठकः ॥

५ ४र ५ ४र५र ४ ५ ४र
( अपाञ्च साम ॥ ) अपामिवेदूर्मयस्तौ। होवा।
५ १ २ ३ ३र २ १ २र १ २र
हाइ। तुराणा२३४ः। हाहोइ। प्रमनी। षाः। ईर-

मुख्या "मनीषा" मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्यते। किञ्च। "दश स्वसारः" दशसङ्ख्याका अङ्गुलयः† "सदनेषु" यज्ञगृहेषु पात्राण्यभिमुखीकृत्य "वह्निं" वोढारं सोमं "सानौ" समुच्छ्रिते [अधिः सप्तम्यर्थानुवादकः] "अव्ये" अविभवे अविबालेन कृते पवित्रे "अञ्जन्ति" प्रेरयन्ति‡ ॥

"प्रथमा मनीषा"--"प्रथमो मनीषो"—इति, "सदनेषु"-- "सद्मानि"—इति च साम्न ऋचः पाठः ॥ ११ ॥ ७७

* ऋ० ९,४,४,१।

† "स्वसारः"—इति अङ्गुलिनामसु अष्टमं नैघण्टुकम् २,५।

‡ "अञ्जन्ति"—इति तु ऋग्वेदीयः पाठः, तमेवाधावलम्बितं सायणेन। सामवेदीयपाठस्तु "मृजन्ति"—इति; अतएव 'मृजन्ति शोधयन्ति'-इति वि०।

२, ३ ५ २ ३र २ १
तेइ । सोमम । च्छा३४ । हाहोइ । नमस्य । ताइ: ।
२ २ ३ ५ २ ३र २ १ १
उपचाइ । यन्तिसम् । चा३४ । हाहोइ । आचवि ।
१ २ ३ २, ३ ५ २ ३र २ ५र
शा । तियुश । तीरुश । ता३४म् । हाहा३४ । औ
र २ १ १ १ १ १
होवा । वा३हा२३४५: ॥ ६ ॥ ७८

प्रस्कण्वऋषिः* । "अपामिव" यथा उदकानाम् "ऊर्मयः" त्वरन्ते । "इत्"—इति पूरणः । तद्वत् "तर्तुराणाः" कर्मणि देवान् स्तोतुन्त्वरमाणाः । [तुर त्वरणे जौहोत्यादिकः (पा०) । यङ्लुगन्तस्य शानचि रूपम् । अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः । अभ्यस्तस्वरः†। तादृशा ऋत्विजः "मनीषाः" मनस ईशित्रीः स्तुतीः "सोममच्छ" सोमं प्रति प्रेरयन्ति । "नमस्यन्तीः" नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् "उपयन्ति" च । उप समीपे गच्छन्ति । तमेव "संयन्ति च" सङ्गच्छन्ते । "[च वा योगे प्रथमा (८,१,५९)—इति न निघातः] "उशतीः" कामयमानाः स्तुतयः "उशन्तं" कामयमानं सोमम् "आविशन्ति च" प्रविशन्ति च ।' १२ ॥ ७८

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य सप्तमः खण्डः ॥

॥ इति त्रैष्टुभम् ॥

---

* "काण्वः"—इति अवि-मे० ।

† "अभ्यस्तानामादिः ( ६, १, १८९ )"—इति पा०।

१ २ १ २ ५ र २ २ २ ५ २ १
होवा३होये३४। विश्वा। हहोइ। पा२३४री। हहो

२ १ २ १ ४
३इ। प्रियाभूवा२३न्। होवा३होये३। आ२३धा३।

२ ५
हा३४५इतोईहाइ ॥ २३ ॥ १०४

त्रितऋषिः* । "प्राणा" यज्ञं कुर्वाणा इत्यर्थः † । "महीनां" महतीनां मंहनीयानां वा अपां ‡ "शिशुः" स्थानीयः सोमः ¶ "ऋतस्य" यज्ञस्य "दीधितिं" दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम् "हिन्वन्" प्रेरयन् § । "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परि भुवत्" परिभवति व्याप्नोति । अपि च "द्विता" द्विधा भवति ‖ । दिवि पृथिव्यां च वर्त्तत इत्यर्थः । +

"प्राणा"-"क्राणा"—इति पाठः ॥ ५ ॥ १०४

---

* "आप्त्यः"—इति ऋषि नि० ।

† भाष्यकारस्तु क्राणाइति ऋग्वेदीयपाठमनुसृत्यैवं व्याख्यातवान्; तथाच यास्कः—"गोभिः क्राणा अभूवन—गोभिः कुर्वाणा अभोषत"—इति ४,१९ । सामवेदीयपाठस्तु प्राणाइति अतएव 'प्राणभूताः'—इति विवरण-व्याख्यानम् ।

‡ 'गवाम्'—इति वि० ।

¶ 'शिशुः शंसनीयः'—इति वि० ।

§ 'आप्नुवन्'—इति वि० ।

‖ 'द्वितवर्णा सोमदेवता एव'—इति वि० ।

+ 'विनियोगोऽस्य षष्ठेऽहनि'—इति वि० ।

अथ षष्ठी।

१२ २१२ ३१२ १२ ३१२
पवस्वदेववीतयइन्दोधाराभिरोजसा।
२३१२
आकलशम्मधुमांत्सोमनःसदः॥ ६॥१०५*

(प्राजापत्ये द्वे॥) पवस्वदा२इ। ववीता२३४याइ। आइन्दोधारा२। भिरोजा२३४मा। आकालशाम्। माधूमा२३४०त्सो। मनएमाना२३ः। सदा५ए। चो५ इ। डा॥२४॥

पवस्वदा। ववीतयाइ। इन्दोधा२३रा३४। भिरो जसा६ए। आका३चा। लाशा२म्। माध३वाइ। मांत्सो२३। मनो२३४वा। सा५दो५वाइं॥२५॥१०५

मनुर्ऋषिः †। हे "इन्दो" सोम! "देववीतये" देवानां भक्ष-

---

* उ० ५,२,१७,१=ऋ० ७,५,१०,४=अथर्व४,१,१७—११,२,१९—९,२,४—१४,१,१७।
† "चाक्षुषः"—इति ऋषि-मै०।

अथ सप्तमी।

१ २ ३ २३ २र ३ २३ १ २
सोमःपुनानऊर्म्मिणाव्यंवारंविधावति।

१ २ ३ १र२र४ ३ १ २
अग्रे वाचःपवमानःकनिक्रदत्॥ ७ ॥ १०६ *

५र २र १ २
(सुम्माने द्वे॥) सोमःपुना। नऊर्मिणा। अव्यं

१ र १ २र१ १
वारा२म्। विधावताइ। अग्रेवाचा२ः। पव। मा२

३ ५र र १ २ र१३ ११११
२ना२३४औहोवा। कनिक्रदढे३पा२३४५॥ २६॥

५र २र१ २ १ ३ ५र
सोमःपुना। नऊर्मिणोवा३। ओ२। वा२३४। औ

र १ र २र ३१ १ २ १
होवा। अव्यंवारंविधावति। अग्रे३। होवा३। हो

णाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम" "मधुमान्" मदकररसवांस्त्वं "नः" अस्म-दीयं "कलशं" द्रोणाख्यम् "आसद" आसीद। [सदेलंक्लृ पम् † ॥ ६ ॥ १०५

---

* उ० २,१,१८,१=ऋ० ७,५,१०,५=आर्चे २,२,१०—७,२,९—९,२,४—१५,२,११।

† 'विनियोगोऽस्य नवमऽवर्गि'—इति वि०।

२। वा२३४। औहोवा। वाचःपवमानः। कनाह्।

होवा३। हो२। वा२३४। औहोवा। क्रा२३४दात् ॥२७॥

(द्यौते द्वे ॥) सोमःपुनानऊ। मिणा। अव्यवारं-

विधावार२३ती। अग्रेवाचाः। पवमानाः। का३निक्र।

दा२३४५त् ॥ २८ ॥

सोमःपुनानऊर्मिणा२३४ऐही। अव्यंवारंविधावता

२३४ऐही। अग्रेवाचःपवमाना२३४ऐही। कानी। क्र

ददे३४ऽ हियाइहा। हो५इ। डा ॥ २९ ॥

(आतीषादीये द्वे ॥) सोमःपुना। नऊ३२र्मो२३४णा।

अव्यंवारम्। विधावति। अग्रा३२इ। वा२३४चाः।

पवा३२। मा२३४नाः। कना३इक्रा५दाई५ईत् ॥ ३० ॥

अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रपुनानायवेधसेसोमायवचउच्यते।

३ १र २र ३ १ २ ३ १ २
भृतिन्नभरामतिभिर्जुजोषते ॥ ८ ॥ १०७ *

३र ४ ५ र २ १ ४र ५ ५ १ र २
सोमःपुना। ह्वो। नऊर्मिणा६ए। अव्यंवारविधा

र २ ३ ३ १ १ १ १ २ १ २
१वा३ती। अग्रेवा२३४५। चा२३४५ः। पवमा२३ना३ः।

१ ३ ५र र २ ३ १ १ १ १
का२ना२३४औहोवा। क्रदंदे२३४५ ॥ ३१ ॥ १०६

अग्निर्ऋषिः †। "पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अविभवं "वारं" वालं पवित्रं "विधावति" विविधं गच्छति। कीदृशः? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ‡ ॥

"अव्यम्"—"अव्यः"—इति साम्न ऋचः पाठः ॥ ७ ॥ १०६

* ऋ० ७, ५, ६, १।

† "वासवः"—इति ऋषि-मै०।

‡ दाधर्त्ति दर्धर्षीत्यादिना ( पा० ७, ४, ६४ ) सिद्धम्।

¶ 'विनियोगोऽस्य चतुर्थ्यवत्'—इति वि०।

२१ ४र ५र
(सामनामानि चत्वारि॥) प्रपुना२३नायवेधसाइ।
१ र र ७ १
चोइ। चोइ। सोमायवचाउच्याता२इ। भृतिन्नभरा
७ १र १ १
मतिभा२इः। जुजोषा२३ना३४३इ॥ ओ२३४५इ। डा
॥ ३२॥

३ र र र ४ रर १ १ १
प्रपुनानोचो५यवेधमाइ। सोमाओ३चो३४। यव
५ ४ २ १ १ १ ५ र ४ १
चउच्यताइ। भृताओ३चो३४। नभरामतिभाइः। जु
५
जा३१उवा२३। पा२३४ते॥ ३३॥ १०७

द्वितो नाम ऋषिः* स्वात्मानं प्रत्याह। "पुनानाय" पवित्रेण पूयमानाय † "वेधसे" कर्म्मणां विधात्रे सोमाय‡ "वचः" स्तोत्र-लक्षणं "प्रोच्यते" त्वया प्रोच्यताम्। किञ्च। "मतिभिः" स्तुतिभिः "जुजोषते" प्रीयमाणाय स्तुतिं "प्रभर" प्रकर्षेण धारय। तत्र दृष्टान्तः। "भृतिम्" यथा भृतकाय भृतिं सम्पादयति तद्वत्।

"वच उच्यते"-"वच उद्यते"—इति साम्न ऋचः पाठः।

॥ ८॥ १०७

* "आप्तः"—इति ऋषि सं०।

† 'सोमपानाय'—इति वि०।

‡ 'मेधाविने सोमाय'—इति वि०। "वेधाः—इति मेधाविनामसु पठं नैघण्टुकम् ३,१५।

अथ नवमी।

१ २ ३ १ २ ३ १ २
गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव।

१ २ ३ १ २ २ ३ १ २
शुचिञ्च वर्णमधि गोषु धारय॥ ९॥ १०८ †

गो४मन्नः। श्चोइ। इन्दो अश्ववाइदे। स्वतःसुदक्ष

धा१नी२वा। शुचिञ्चवा२३४५। णमधिगो२३४औहो

वा। षु२३४धा। रया। औ३होवा। होप्र्इ। डा॥

॥ ३४॥ १०८

पर्वतनारदावृषी। हे "सुदक्ष" सुबल! हे "इन्दो" सोम। "सुतः" अभिषुतस्त्वं "नः अस्माकम्"‡ "गोमत्" यज्ञ-साधन-गो-युक्तं धनं "धनिव" धन्व [ वर्णविकारः ¶ ] गमय [ धन्व-तिर्गत्यर्थः § ] ततो हं "शुचिं" पूतन्दीप्यमानं "वर्णं" रसञ्च "गोषु" क्षीरादिषु "अधिधारय" अधिकं प्रापयामि॥

* "मं"—इति क०।

† ऋ० ७,३,१०,१=ऋ० ७,५,८,४=ऊहे १२,१,१४—१७,१,२—१८,२,१।

‡ 'नः अस्माकम्'—इति वि०।

¶ "अत्ययोपक्रमम् (१.४,९८)"—इति पाणिनी-सूत्रस्य-सुप्तिङित्यादिवचनार्थः।

§ नि० मैं० २,१४,९४।

अथ दशमी ।

२ ३ १ २　　३ १ २ ३ १र　२र
अस्मभ्यन्त्वावसुविदमभिवाणीरनूषत ।
१　२ ३ १ २ ३ १ २
गोभिष्टे वर्णमभिवासयामसि ॥ १० ॥ १०९ *

४　५　　२　५　　२ ३　५
त्वावास्मा । भ्यार२३४न्त्वा । वासुवी२३४दाम् ।
१　३　५　　२ ९ २　५　　३　५
आभार२वा२३४णीः । अनाऔ२३४वा । पा२३४ता ।
१र २ र १　　२ ३ २ १　　२ र　३
गोभिष्टे व । र्णमभिवा२३ । सयामसिवौ२३४५इ । डा ॥
॥ ३५ ॥ १०९

"धनिव"-"धन्व"—इति, "धारय" "दीर्घरम्"—इति च छन्दोग बह्वृचानां पाठभेदः ॥ ९ ॥ १०८

पर्वतनारदावृषी । सोम ! "वसुविदं" धनस्य दातारं "त्वा" त्वाम् "अस्मभ्य" धनादिदानार्थं "वाणीः" अस्मदीयावाचः "अभ्यनूषत" अभिष्टुवन्ति | नू स्तवने ( अदा०प० ] । वयं "ते" तव "वर्णम्" आवरकं रसं "गाभिः" गो विकारैः क्षीरादिभिः "अभिवासयामसि" अभिवासयामः अभित आच्छादयामः ॥ १० ॥

* ऋ० ९,५,९,४ ।

अथैकादशी।

१२ ३२उ ३१ १ ११२ २१ २
पवतेहर्यतोहरिरतिह्वराᳪसिरᳪह्या।

३क २र ३ १२ ३१ ३ १ २
अभ्यर्षस्तोतृभ्योवीरवद्यशः॥ ११॥ ११०

५ र २१र २
(यशाᳪसि त्रीणि॥) पवतेहा। र्यतोहरिः। औ

२ ३ ५ १ २१ ५र १ २र
३होऽ३१इ। औरहोर३४वा। आतिह्वरा२ᳪसिरᳪह्विया।

१र २ ३ ५ २ १० र १२र१
औहोऽ३१इ। औरहोर३४वा। अभ्यर्षस्तोतृभ्योवा।

२ २ ३ ५ १ २ ५र र
औहोऽ३१इ। औरहोर३४वा। रा२वार३४औहोवा।

१र १ २ १ १ १ १
यशोयशा२३४५ः॥ २६॥

३२ ५ ५र २ १र २र १ ५
पवा३। पवतेह्वा। र्यतोर्हरिः। औहोइ। औ३

२ १र २ १ २१५र १ २ र र १
होइ। औहोइ। आतिह्वरा२ᳪसिरᳪह्विया। औहो

५ २ १र २ १२ र १२र १ २र
इ। औ३होइ। औहोइ। अभ्यर्षस्तोतृभ्योवा। औ

---

* ऋ० ९.२.२२.१=ऋ० ७,५.११,३=अर्चे १ २.१८—६.२.१५—९.२,१८—९.२.२= ज्यो १,१,२९।

१ ऽ २ ३र २ १ २ ५र र
होइ। औ३होइ। औहो३। रा२वा२३४औहोवा।

२ र १ २ १ १ १ १
यशोयशा२३४५ः॥ ३७॥

३ ४ ५र ३ २ १ ५र ४
पवतेहर्यतः। हरी३ः। आ२३४। तिह्वरा९सिर।

५ २ १ र ५ ३र २ १ २
हिया। अभ्यर्षा२३४। स्तोतृ। भ्योवा३इ। रा२वा

५र र २ ५
२३४औहोवा। या२३४शाः॥ ३८॥ ११०

अग्निर्याक्षुष ऋषिः। "हर्यतः" स्पृहणीयः* "हरिः" हरितवर्णः सोमः "रंह्या" [तृतीयाया आकारः†] साधु वेगेन "ह्वरांसि" कुटिलानि अनृजूनि पवित्राणि "अति पवते" अतीत्य गच्छति। अथ प्रत्यक्षस्तुतिः—हे सोम! त्वं "स्तोतृभ्यः" "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्ष" अभिगमय प्रयच्छेत्यर्थः‡।

"अभ्यर्ष"-"अभ्यर्षन्"—इति साम्न ऋचः पाठौ॥ ११॥ ११०

---

* 'हरिभिर्यन्ता'—इति वि०।

† "सुपांसुलुक् (७,१,३९)' —इत्यादिनेति भावः।

‡ 'विनियोगोऽस्य प्रथमऽस्वनि'—इति वि०।

अथ द्वादशी।

३ १ २ ३ २ ३ १ २ ३ १ २
परि कोशम्मधुश्चुतꣳसोमः पुनानो अर्षति।
३ १ ३ ३ १ २ ३ १ २
अभि वाणीर्ऋषीणाꣳसप्ता* नूषत॥ १२॥ १११ †

॥ तृतीय-दशति॥

(भारद्वाजम्॥) परिकोऽशम्मधुश्चुताम्। सोमः पुनानोअर्षति। चोयि३। अभिवार२३४५। णीर्ऋषी णाꣳस। प्तानो ओ२३४वा। पार३४ता॥ ३८॥ १११

॥ इति अर्द्धःप्रपाठकः॥

हितऋषिः‡। सः "पुनानः" पूयमानः सोमः "मधुश्चुतं" मधुर-रसस्य च्यावयितारं द्रोणकलशं प्रति आत्मीयं रसं "पर्य-र्षति" परि गमयति। तमिमं सोमम् "ऋषीणां" "सप्त वाणीः" सप्तच्छन्दांसि¶ "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने कुटादिः (प०)।

---

* "सप्त"—इति ऋ०।

† ऋ० ७,५,९,२।

‡ "आप्त्यः"—इति ऋषि मै०।

¶ गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती चेति सप्त-च्छन्दांसि।

"सोमः पुनानो अर्षति"-"अव्यये वारे अर्षति"—इति साम्न ऋचः पाठो॥ १२ ॥ १११

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य दशमः खण्डः ॥

॥ इत्यौष्णिहम् ॥

—ः○ः—

स्वः पवस्वेति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु ।
'ससुन्वे'-इति गायत्री यवमध्येति* केचन ।
अक्षरव्यूहनादेषा ककुबेवेति केचन ।
"एष धारयासुतः" प्रगाथः काकुभोऽन्तिमः ।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे ॥

तत्र एकादशे खण्डे—

सैषा प्रथमा ।

१ २ ३ १ २   ३१ २   ३१ २३ १ २
पवस्वमधुमत्तमइन्द्रायसोमक्रतुवित्तमोमदः ।
१ २ ३ १ २ ३ १ २
महिद्युक्षतमोमदः ॥ १ ॥ ११२

* "विपरीता यवमध्या (पिं० ३, ५८)" यदाद्यन्तौ पादौ सप्ताक्षरौ भवतः मध्यमश्च षडक्षरः तदा यवमध्येति कथ्यते ।

१ उ० १,१,१६,७=ऋ० ९,४,१७,१ = काठ० १,१,६—७,१,८—९,२७—१०,१,४—१०,२,४—१३,१,४—१३,३,१८—१४,१,८ ।

४ ५ १ २
ओम् ॥ (वासिष्ठम् ॥) पावा। स्वमाधुमा। तामा
२ ५ १ ५ १र १ १र१ २
ओ२३४वा। ई२३४न्द्रा। यसोमक्रतुवित्तमोमदा३ः।
१ २ ३ ५ १ १ २र १ १ १२११
ओइ। माच्चाओ२३४वा। द्युत्तमोमदा२३४५ः॥ १॥

१ ५ ४ ५ ५ १
(सफम् ॥) पा३४। वस्वम। धुमत्ता६माः। आ
१ १ २ ४ २ २
इन्द्रा२। यसोमा२। क्रतुवाइत्ता३मो३। मा३दाः।
१ २ ४ २ ५
मच्चिद्युत्ताता३मो३। मा३४५दो६ हाइ॥ २॥

४५ ४५र ४ १ र र २
पवस्वमधुमा। इहा। तमः। इन्द्रायसोमक्रतुवित्त
१र १ १ २ १ २ १ २ १र
मोमा२३दाः। इहा। मद्दाइद्यु२३त्ता। इहा। तमा
२ १
मा२३दा३४३ः। ओ२३४५इ। डा॥ ३॥

४५ ४र ४ १
(वासिष्ठम् ॥) पवस्वमा। ए५। धुमा। तमाः।
१र १ २ २ १ २
इन्द्रायसो३। हा। औ३हो। माक्रातुवो२३दा३।

अथ द्वितीया।

३ २ ३ २ ३ १२उ ३ १ २  ३ १ २  ३ २
अभिद्युम्नम्बृहद्यशइषस्पतेदिदीहिदेवदेवयुम्।

१२ ३२ ३ १ २
विकोशम्मध्यमंयुव॥ २ ॥ ११३ *

१ २ २  ३ २  ३ २  १ २  १ २
हा। औ३हो३४। तमो३४मदाः। महाये३। द्यू२त्ता २

५र र  १र १ २ १ १ १ १
३४औहोवा। तमोमदा२३४५ः॥ ४॥

२ १ ०  ४ ५  २ ३  ५  २ १ र
(सफम्॥) पवस्वा३मधु। मत्ता२३४माः। इन्द्रा

२ १  १ २  २ ५  २ १
यसोमा२। क्रतुवाइत्ता३मो३। मो३२३४दाः। महा

२ ४  २  ५
इ। द्यु ताता३मो३। मा३४५दो६हाइ॥ ५॥ ११२

गौरिवीतिः ऋषिः†। हे "सोम"! "मधुमत्तमः" अतिशयेन माधुर्योपेतस्त्वम् "इन्द्राय" इन्द्रार्थं "मदः" मदकरः सन् "पवस्व" चर। कीदृशः? "क्रतुवित्तमः" अत्यन्तं प्रज्ञायाः कर्मणो वा लम्भकः "महि" "महान्" मंहनीयो वा "द्युक्षतमः" अत्यन्तदीप्तः "मदः" हृष्टः॥ १॥ ११२.

* उ० ३,२,(१०.१=ऋ० ७,५,१८,४ ... ऊंच ३,१,९— ४.१.१ — ८,१,१२—१४,१,१४

† "माक्राः"—इति ख्रपि-मे०।

१ १ २ ४ १
( ए ते विराणि चत्वारि ॥ ) पभाइ । द्युम्नाइम्नृ३च
३ ५ १ १ २ र र ४ २र३५ २ १
द्यमः । द्वृषाः । पतेदिदीचिदे३वा३देवयुम् । विको ।
२ ३ २ ४
श्रम्म । ध्यमा३०यू५वाई५ई ॥ ६ ॥
५ ४ ५ २ १ २ १
श्र । भ्यैद्युम्नाम् । बृहाद्या१श्रा२ः । द्वृषास्पता
१ २ ३ ५ २ २ २ ५ २
इ । दीदीहा२३४इदे । वदाइवा२३४यूम् । विकौवा
३ ५ १ २ ५
श्रो२३४वा । श्रम्माध्यभा३१उवा२३ । यू२३४वा ॥ ७ ॥
५ ४ ५ ४ ५ ४ १ र र
पभिद्युम्नम्बृहत् । दूहा । यशः । द्वृषस्पतेदिदीहि
र२१र २ र १र २ १ ऽर १ १
देवदेवा२३यूम् । विकौहोवा३हाइ । श्रम्मा२ध्यमंयुव ।
१ २ १
द्वुडा२३भा२४३ । पो२३४५ । डा ॥ ८ ॥
५ ५ २ १ १ र १
पभिद्युम्नम्बृहद्यशाः । द्वृषस्पताइ । दिदीहिदा
२र १र र १
इ । वादेवयूम् । विकोश्रम्मध्यमा२३९होइ । यू२३४
ऽ ५र ५ ४
वा । एहियाइहा । होपइ । डा ॥ ९ ॥ ११२

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ १ २र २र ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वंनस्तोममप्तुरꣳरजस्तुरम्।

२ ३ २ ३ १ २
वनप्रक्षमुदप्रुतम् ॥ २ ॥ ११४ *

ऊर्ध्वसद्मा ऋषिः†। हे "इषस्पते" अन्नस्य पते! हे "देव" स्तोतव्य सोम! "देवकामं" त्वां वय मभिष्टुम इति शेषः। किञ्च। त्वं "द्युम्नं" द्योतमानं "बृहत्" प्रभूतं "यशः" अन्नम् अन्नभ्यम् "अभिदीदिहि" आभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः [आमन्त्रितस्याविद्यमानत्वेन ‡ पादादित्वान्न निघातः¶] किञ्च "मध्यमम् §" अन्तरिक्षस्थितं "कोशं" मेघं ‖ "वि युव" वृष्ट्यर्थं गमय विश्लेषय + ॥

"देवयुम्"-"देवयुः"—इति पाठौ ॥ २ ॥ ११५

---

* उ० ६,२,६,१=ऋ०७,५,१८,१=ऋवे ९,१,१—७,१,१७—१२,१,११।

† "आङ्गिरसः"—इति अपि मे०।

‡ "आमन्त्रितं पूर्वमविद्यमानवत्"—इति पा०७,१,१०।

¶ "आमन्त्रितस्य च (पा० ८,१,१९)"—इत्याष्टमिको निघातो न, अपितु "आमन्त्रितस्य च (पा०६,१,१९८)"—षाष्ठाद्युदात्तमेवेति भावः।

§ 'मध्यमं मध्यमे सवने'—इति वि० माध्यन्दिने इति तदर्थः।

‖ "कोशम्"—इति मेघनामसु विंशतितमं नैघण्टुकम् १,१०।

+ 'विमिश्रणेऽस्य पचनेऽर्थः'—इति वि०।

५र र र १
(कार्णश्रवसानि त्रीणि॥) आसोतापा। रा२इ

३ ५र र ३ ५ १ २१ र २ १ ऽर
षा२३४औहोवा। चा२३४ता। अश्वन्नस्तोममप्तुरार२ (१) र

१ २ २ १ २ १ २
जस्तुरम्। ओयि३। वना३। ओयि। प्रश्ना३४।

५र र २ १ ३ १ १ १ १
औहोवा। उदप्रुता२३४५म्॥ १०॥

५र र र १ १
आसोतापा। रिषि। चता२। ऊ२। हा२इ।

१ २१र २ १
ऊ२। अश्वन्नस्तोमम। प्तुरा२म्। ऊ२। हा२इ।

१
ऊ२। रज। स्तुरा२म्। ऊ२। हा२इ। ऊ२।

१ २ २
वन। प्रश्ना२म्। ऊ२। हा२इ। ऊ२। उद।

१ २ ५र र २ ५
प्रूरता२३४औहोवा। ऊ३२३४पा॥ ११॥

५र र र १
आसोतापा। रि। षाइ। चता। अश्वान्नस्तो।

२ ३ ५ १ २ ३ ५ ४ १
मामप्तू२३४राम्। रजास्तू२३४राम्। वनोहाइ। प्रा

२ २ १ २ ५
श्वा भू३दा। हुम्मायि३। प्रू२३४ताम्॥ १२॥

(वाचःसामानि त्रीणि॥) आसोतापारी६षिञ्चता।

आश्वाओ२३४वा। नस्तोममप्तुरा२९रजस्तुरा२३म्।

वोइ। वानाओ२३४वा। प्रत्नमुदप्रुता२३४म्॥ १३॥

आसो३४औवोवा। तापराइषिञ्चाता२। आश्व-

न्नस्तो। मामप्तूरा२म्। रजास्तू२३४राम्। वनो

वाइ। प्रात्नमुदा३१उवा२३। प्रू२३४ताम्॥ १४॥

आसोतापा। वो। रिषिञ्चता६ए। आश्वन्नस्तो

मामप्तूरा२म्। राजस्तुरम्। वानप्राक्षा२३म्। ऊ

२३दा३। प्र३४५तोई वाइ॥ १५॥

ऋजिश्वा ऋषिः*। हे ऋत्विजः! "आ सोत" सोम मभिषुत [षुञ् अभिषवे (स्वा०उ०) लोटि छान्दसो विकरणस्य लुक्†

* "भारद्वाजः"—इति ऋषिःमै०।

† "सुपांसुलुक् (१.७,३९)"—इत्यादिनेति भावः।

अथ चतुर्थी।

२ ३ २ ३ १ २ ३ १ २ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
एतमुत्यम्मदच्युतꣳसहस्रधारंवृषभन्दिवोदुहम्।

२ १२ ३ १ २
विश्वावसूनिबिभ्रतम्॥ ४ ॥ ११५ *

(कौल्मलबर्हिषे द्वे ॥) ४ ५ एताम्। १ उत्याम्। ० मदा

२ ५ २ १ २ १ २ १
२च्यू२३४ताम्। सहस्रधा। रांवृषभा३म्। दिवो

"तप्तनप्तनथनाश्च (पा०७,१,४५)"—इति तस्य तबादेशः] किं च। "परि षिञ्चत" परितः वसतीवर्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्व मिव वेगिनम्। "स्तोमं" स्तोतव्यम् "असुरम्" † अन्तरिक्षस्थितानामुदकानां प्रेरकं "रजस्तुरं" तेजसां वा प्रेरकम। "वनप्रक्षम्" उदकैः सम्पृक्तम्। यद्वा। काष्ठेषु पात्रेषु धारकं प्रकीर्णम् "उदप्रुतम्" उदकं गच्छन्तं प्लवमानं सोम मभिषुत अभिषिञ्चत॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति साम्न ऋचः पाठौ॥ ३॥११४

---

* ऋ० ७.५,१८,१।

† 'तरति तम्'—इति वि०।

‡ 'विनियोगोऽस्य वतीयेऽस्मि'—इति वि०।

२दु२३४वाम्। विश्वा२वौ१इ। वाइ। वा२३व३। नार२इवा२३४ओवोवा। आ२३४ताम्॥ १६॥

एतामूत्याम्। मदा३१ओवा२३। च्यू२३४ताम्। सहस्रधारंवृषभन्दिवोदुहा२३म्। वाइश्वावाव। निवा३१ओवाये३। आ२३४ताम्॥ १७॥

(आङ्॥) एतमुत्यम्। एप्। मदा। च्युताम्। सहस्रधारंवृषभंदिवोदू२३हाम्। वाइश्वा२वाव२३। निवो२३४वा। आपूतो६हाइ॥ १८॥

(कौल्मलबर्हिषाणि त्रीणि॥) एतमुत्यम्। ओ हाइ। मदच्युतम्। ओहाइ। साहस्रा२३४धा। रवार्षा२३४भाम्।। दिवोदुहमे२३४हाइ। विश्वा२वा

१इ। वा२३ह्व३। ना२इवा२३४औहोवा। आ२३४

ताम्॥ १९॥

एतामुत्यम्मदाच्युताम्। साहस्रधा। रांवृषाभा-

रम्। दिवो२। दुहमोइ। विश्वावसूनिवा२३होइ।

आतमा३१उवा२३। ऊ२३४पा॥ २०॥

एता३४म्। उत्यम्मदा। च्यूताम्। सहस्रधार२

वृ। षभम्। दिवो२३१२३। दू२३४हाम्। विश्वा

वसूनिबा३ओये३। आ२३४ताम्। एहियाऽ६हा। होपइ।

डा॥ २१॥ ११५

कृतयशाऋषिः*। "दिवः" देवान् कामयमानाऋत्विजः†।

* "आङ्गिरसः"—इति ऋषि नं०।

† 'दिवो दुहम—दिव आहृत्य इमं लोक मुदकेन पूरयति'—इति वि०।

अथ पञ्चमी ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ ३ २ ३ १ २ ३ २
मस्तुन्वेयोवह्ननायोरायामानितायइडानाम् ।

२ ३ १ २ ३ २
सोमोयःसुक्षितीनाम् ॥ ५ ॥ ११६ *

४ ५ १ २ २ २ १
( दीर्घम् ॥ ) साम्न । न्वे योवह्न२३नाम् । योरा

१ २ २ १ २ १ २ १
२यामा२ । नितायइडा२३नाम् । सो२३माः । यःसु

२ १ ५ ५
क्षिता२३४हुनोईवाइ ॥ २२ ॥

"एतं" "त्यमु" सोममेव "दुहम्" अदुहन् [दुहेर्लिङि रूपम्†] दुहन्ति स्म [छान्दसो नकारस्य मकारः ‡] । "ग्रावाणो वत्सा ऋत्विजो दुहन्तीति" तैत्तिरीयकब्राह्मणम्] कीदृशं सोमम्? "मदच्युतं" मदस्य प्रेरकं "सहस्रधारं" बहुधारम् "वृषभं" कामानां वर्षकं "विश्वा" सर्वाणि "वसूनि" धनानि "बिभ्रतं" धारयन्तम् ॥

"दिवोदुहम्"—इति, "दिवं दुहम्"—इति पाठौ ॥ ४ ॥११५

* उ० ४,१,१८,१=ऋ० ७,५,१४,७=ऋक् ३,२,२ -२७,१,१४ ।

† "दुह प्रपूरणे"—धाटा० प० ।

‡ "व्यत्ययो बहुलम् ( पा० ३,१,८५ )"—इत्यनेनेति भावः ।

४ ५ १र र र
(लोमसाम)॥ सत्तुद्धाउ। न्वेयोवद्भनार२३९

१ १ १ र र १ र २
द्धाउ। योरा२यामा२। नेतायः। इ्डाना२३९द्धा

१र र १ १ १ २र १ ४
उ। सोमोयःद्ध३द्धाउ। च्चितीनाम्। औरहो

५ ४
वा। होपुइ। डा॥२३॥

४ १ १ र
सोमसामानि त्रीणि॥) सः। त्वसाद्ध। न्वेयो

२ १ १ १ १ १र २र १र२र र१र
वसा३१उवार२३। ना२३४५म्। योरा२यामा२नेताय

१ २र र२ १ ५ १ २
इ्डा२ना३म्। सोमौवाओ२३४वा। यःसुच्चिता३१उ

२ १ १ १ १ १
वायि३। ना२३४५म्॥२४॥

२ १ ४र ५र २र १ २ २ र
सत्तुन्वे२३योवद्भनाम्। योराया१मा२३नै। ताय

१ १र ३र १ २ र १ र
इ्डा२३४५ना६५६म्। सोमो२यःसुच्चितीनाम्। सो

१ १ १ १
मा२३४५ः॥२५॥

४ ५ र र ४ ५ २र १ २ १ र र
सत्तुन्वयाः। एवाद्ध। नायोरा१या२३मा। नेता

अथ षष्ठी।

२　　१ २ ३ १ २　　३ १ २　　३ १ २
त्व१ह्याऽ३ङ्ग*दैव्य†म्पवमानजनिमानिद्युमत्तमः।

३　　१ २ ३ १ २
अमृतत्वायघोषयन्॥ ६॥ ११७ ‡

१　　२　　३ २ ३　　१　　२　　१
यइडाऽ२३नाऽ३४म्। सोमाऽ३ः। यःसुचि। ताऽ२३४५इः।

२ ११११
नाऽ२३४५म्॥ २६॥ ११६

ऋणवऋषिः¶। "यः" "सः" "सोमः" "सुम्वे" अभिषुषुवे ऋत्विग्भिः§। यः सोमः "वसूनां" धनानां "आनेता" यश्च "रायां" [रान्ति प्रयच्छन्ति क्षीरादिकमिति] रायो गावस्तेषा मानेता विद्यते यश्च सोमः "सुचितीनां" शोभन-मनुष्याणाम्॥ आनेता सोऽभिषुतोऽभूदिति + ॥ ५॥ ११६

* "ह्याऽङ्ग"—इति } ऋ०-पाठौ।
† "दैव्या"—इति च }

‡ उ० ७,१,१०,१ - ऋ० ७,५,१०,१ = ऋवे ९,२,१४—४,३,२६—११,२,१८—१९,१,१२।

¶ "आङ्गिरसः"—इति ऋषि नै०।

§ "सुम्वे सुम"—इति वि०।

॥ "क्षितयः"—इति मनुष्यनामसु पठं नैघण्टुकम् २,३।

+ 'विनियोगोऽस्य यज्ञे स्तुतिः' इति वि०।

(ग्रैतोक्षाणि चत्वारि॥) त्वꣳह्यिया। गदाइवियप

वमानजनिमानीइद्युमा२। तामा२ः। आमा२र्त्ता

त्वा२३। यघो२३४वा। पा५योई्हाइ॥ २७॥

त्वꣳह्यिया। गदाइविय। पवमान। ह्योवा३हाइ।

जनिमा२३नी३४। द्युम। ता३मा। अमा२३। ता

२त्वा२३४औहोवा। यघो३षया२३४५न्॥ २८॥

त्वꣳह्यङ्गदा। विय। पवमानजनिमानिद्युमत्ता२

३माः। अमार्त्ता२३त्वा३। यघो२३४वा। पा५योइ

हाइ॥ २९॥

त्वꣳह्यो३मङ्गदैविया। पवमा२ना। जनिमा२ना

ये३४। द्युम। ता३माः। अमार्त्ता३त्वा३। यघो२

३४वा। पा५योइहाइ॥ ३०॥ ११७

अथ सप्तमी।

२१ २र ३२ ३१२ ३१२

एषस्यधारयासुतोव्यावारेभिःपवतेमदिन्तमः।

१२३ १२३१ २

क्रीडन्नूर्मिरपामिव॥७॥ ११८ *

४ ५ १ ३ २

(गायत्रपार्श्वम्॥) एषाः। स्याधारया३१उवा

५ १ ३र १२र १ २ १ २ २

२३। सू२३४ताः। अव्या२वारेभिःपवतेमदिन्तमः। क्री

१२ २२ १ ४ १ ११११

डानू१मी२ः। अपा३म्। इ२३वा३। आइवा२३४५॥ ७१॥

शक्तिःऋषिः †। हे "पवमान" पवमान सोम! "द्युमत्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "दैव्यं" देवसम्बन्धीनि "जनिमानि" जन्मानि देवानित्यर्थः। जानासीति शेषः। तानभिलक्ष्य "अमृतत्वाय" तेषाम् अमरणाय "अङ्क" क्षिप्रं ‡ "घोषयन्" ऋत्विजो ग्रावाणोव शब्द मुदपादयन् उत्पादयन्ति ¶ [हि योगादनिघातः §॥

"घोषयन्"-"घोषः"—इति पाठौ॥ ॥६॥ ११७

* ऋ० ७,४,१७,५=ऋवे ७,१,११ –१८,१.१।

† "वासिष्ठः"—इति ऋषि-सं०।

‡ "अङ्केति क्षिप्रनामाञ्चितमेवाङ्कितं भवति"—इति यास्कः (निरु०-सं०५,१७)।

¶ 'घोषयन् स्तुयमे'—इति वि०।

§ "यद्धितु परन्नछन्दसि"—इति पा० ८,१,५६।

‖ 'विनियोगोऽस्य तृतीयेऽह्नि'-इति वि०।

४र ५ १ र १
(सन्तनि)॥ एषाहाउ। स्याधारयाइ१उवार३।

५ १ ५र १२र र २ र १ ३ ४र
सू२३४ता:। अव्यार्ववारेभि:पवतेमदिन्तमा२३:। क्रीडन्

५ १ १ ५
हाउ। ऊर्मिरपाइ१उवा२३। ई२३४वा॥—*

२ १र र २
(सोमसामानि चैव त्रीणि॥) एषस्यधा। राया१

३ र २र १ २र ३ .२ १
सुतार:। अव्यावाराइ। भाइ:पवते। मदिन्तमा:।

१र१ २ १ ४ २ ५
क्रीडन्२३र्मी३:। आर३पा३म। आ३४५इवोईहाइ॥२३॥

२ १ २ ४र ५र १ १र र
एषस्याइधारयासुता:। अव्याहो२इ। वारेभि:पव

र ७ १र २ ३ र
तेभादिन्तामा२:। क्रीडा२न्हो१इ। ऊ२३र्मी:। अपा

२ १ २ ४ ५ ४
मिवा। औ३होवा। हो५इ। डा॥२४॥

---

* एतस्यैव साम्न: परार्द्ध यउत्थियेत्यष्टमर्षां गानम्। अनयो: सप्तमाष्टमयो: ऋचो: प्रमाणो भवति। मीमांसादर्शनाधिकरणमालायां नवमाध्याय-द्वितीयपाद-षष्ठाधिकरणादौ तत्तवादयोऽपि विचारिता:। अपि चात्रैव भाष्यस्तो भूमिकायां तद्नुसेय: समन्तात् (२५पृ०—३८पृ०) नैनानयो: त्यृचं सम्पद्यते. अतएताहश विच-मूलक-साम-दर्शनस्यायमेव हेतु:। तादृश-त्यृच-मूलक सामानि चात्र ऊहे (४, १, ८, २, १) द्रष्टव्यानि।

५
३४वा। ५.

४र　　　र ४　　　१ १र २र १　　　१ १ १ १
एषस्यधापूरयासुताः। अव्यावाराइ। भिःपवता२

१ २　२　　१र र　　१　१　　५　५
३इ। मदिन्तमाः। क्रीडन्नूर्मिरपोवा३ओ२३४वा। आ

५
५इवोई॒३डा॥ ३५॥११८

॥ इति ग्रामे गेये सप्तदशः प्रपाठकः॥

॥ इति गेयगानं सम्पूर्णम्॥

उरुऋषिः*। "स्यः" सः "एषः" "सुतः" अभिषुतः सोमः "अव्या वारेभिः" अवेर्वालैः तेभ्यः पवित्रे "धारया" आत्मीयया "पवते" कलश मभिलक्ष्य क्षरति। कीदृशः? "मदिन्तमः" मादयितृतमः। "अपामिव" उदकानाम् "ऊर्मिः" सङ्घात इव "क्रीडन्" इतस्ततः सङ्क्रीडमानः पवते†॥

"अव्यावारेभिः"—"अव्योवारेभिः"—इति साम्न ऋचः पाठभेदः॥ ७॥ ११८

* "आङ्गिरसः"—इति ऋषि में०।

† 'विनियोगोऽस्य चतुर्दशे'—इति वि०।

अथाष्टमी ।

२१ २३ १ ३ २ २ १ २र ३ १ १र ३ १ २
यउस्रियास्वपियाअन्तरश्मनिनिर्गाअकृन्तदोजसा ।
१ २ २१ ३२३ २ ३१ २ २ १२ १ ३१
अभिव्रजन्तत्निषेगव्यमश्व्यंवर्मीवधृष्णवारुज (ओ३म् वर्मी
२ ३१२
वधृष्णा वारुज* ) ॥ ८ ॥ ११९ †

॥ चतुर्थ-दशति ॥

॥ इति षष्ठः प्रपाठकः समाप्तः ॥ ‡

॥ समाप्तञ्च छन्दआर्च्चिकम् ॥ ¶

१ ५र १ र ३ ४ ५ १
यउस्रिया२स्वपिया अन्तरश्मनी२३ । निर्गाहाउ । आ
१ ५ २१ २र१
कृन्तदा३१उवा२३ । जा२३४सा । अभिव्रजन्तत्निषेगव्यम
३ ४ ५ १ २
श्विया२३म् । वर्मीहाउ । वाधृष्णवा३१उवा२३ । रु२
५
३४जा ॥ ३२ § ॥ ११९

---

* क० ख० पुस्तकयो रेव मभ्यासपाठो न दृश्यते । वस्तुतः षष्ठादि-समाप्तावपि मन्त्राभ्यासो वैदिकशैली ।

† ऋ०७,५,१८,१=ऋग्वे ४,१,२—१८,९,१ ।

‡, ¶ भाष्यकृतः सायणस्य मत-सिद्धएतत् परं तुः सर्वमूलपुस्तकेषु ।

§ इदं हि, पूर्व-प्रदर्शित 'सन्ति'-नामकस्य 'रुपाहाउ'—इत्येतस्य ( १२८ पृ० ) साम्नोऽन्तिमं दशम् । ततश्च न तु गेयगानादन्यदिति भ्रमम् । अतएव द्वात्रिंशदङ्का न्मितमिति भ्रम ।

ऋजिश्वाऋषिः *। "यः" सोमः "उस्रियाः" उत्सरणशीलाः† "अपियाः" अप्याः [आपइत्यन्तरिक्षनाम (नै० १,३,८)। तस्मात् "भवे छन्दसि (पा० ४,४,११०)"—इति यत्] अन्तरिक्षस्थाः। अहि-प्रभृतिभिरसुरैः ‡ अपाहृत्य निहिता "गाः" आपः ¶ "अश्मनि" मेघे § "अन्तः" मध्ये स्थिताइत्यर्थः। "ओजसा" बलेन "निरतक्षत्" निरच्छिनत् निरगमयत् अन्तरिक्षाद्दृष्टि मकार्षीदित्यर्थः। स त्वम् असुरैरपहृतं "गव्यम्" गो-सम्बन्धि "अश्व्यम्" अश्वेषु भवं "व्रजं" समूहं "अभि तत्निषे" अभितो व्याप्नोति [तनु विस्तारे—छान्दसे लिटि ॥ "तनिपत्योश्छन्दसि (पा० ६,४,९९)"—इत्युपधालोपः]। किञ्च। हे "धृष्णो" शत्रु-धर्षणशील+ सोम! स त्वं "वर्मीव" कवचीव÷ "आरुज" असुरान् जहि ॥

* "भारद्वाजः"—इति ऋषि-नै०।

† 'उस्रियाः आदित्य रश्मयः अनड्वाहो वा'—इति वि०। "उस्रियाः"—इति गोनामसु तृतीयं नैघण्टुकम् (२, ११)। "उस्राः"—इति तु रश्मिनामसु नवमं नैघण्टुकम् (१, ५)। "उस्रियेति गोनामोत्स्राविणोऽस्या भोगा उस्रेति च"—इति यास्कः (निरु० नै० ४, १९)।

‡ अहिरिति असुरइति चेमौ द्वावेव मेघपर्य्यायौ नै०१,१०,२३,१९।

¶ इह सामं मृग्यम्।

§ "अश्मा"—इति मेघनामसु आद्यमं नैघण्टुकम् १,१०।

|| "छन्दसि लिट्"—इति पा० ३,२,१०५।

+ 'धृष्णो धारयन्'—इति वि०।

÷ 'वर्मी सविता'—इति वि०।

"अपिया अन्तरश्मनि"-"अप्या अन्तरश्मनः"—इति छन्दोग-बह्वृचानां पाठभेदः ॥ ८ ॥ ११९

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने पञ्चमस्याध्यायस्यैकादशः खण्डः ॥११॥

॥ इति काकुभं समाप्तम् ॥

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमोऽध्यायः समाप्त ॥ ५ ॥

॥ सौम्यं पावमानं वा पर्व्व काण्डं वा समाप्तम् ॥

॥ इति तृतीयं पर्व्व ॥

ॐ नमः सामवेदाय।

## अथ षष्ठोऽध्याय आरभ्यते॥



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ १॥

आरण्यकाभिधः* षष्ठोऽध्यायो व्याक्रियतेऽधुना † ॥ २॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चागतां क्रमात्।
ऋषिं छन्दो दैवतञ्च तत्र तत्राभिदध्महे॥ ३॥

तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः।
द्वितीयस्या वसिष्ठः स्यात्तृतीयाया ऋचः स्मृतः॥ ४॥
वामदेव स्ततश्छन्दो बृहती त्रिष्टुबेव च।
गायत्रीति क्रमादिन्द्रो भवेत्तिसृषु दैवता॥ ५॥

---

* "अरण्यान्मनुष्ये" (४, २, १२९ पा०)। अत्यल्पमिदमुच्यते मनुष्यइति (प०)। पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् (का०)। आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती (प०)। वा गोमयेषु (का०)। वा गोमयेष्विति वक्तव्यम्। आरण्यका गोमयाः आरण्या गोमयाः (प०)।

† अथ आर्चिक ग्रन्था इति विवरणादि-सकल-ग्रन्थ-सूचना वैदिक-प्रवादागमतः गुणकाग्रन्थ-समीकरणोपसमभ्याय। तथाच षडध्यायात्मकश्छन्दो नाम एकः, अपरो

तत्र प्रथम-खण्डे—

सैषा प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

इन्द्रज्येष्ठन्नआभरओजिष्ठम्पुपुरिश्रवः

१२ २२ ३ १ २ ३ १२ १२२

यद्दिधृक्षेमवज्रहस्तरोदसीउभेसुशिप्रपप्राः॥ १ ॥ १ *

२२ २२ २ २ २ २ २२

† हाउ। ३। औहोइन्द्रज्येष्ठन्नआभरा३ए। हाउ।

१२ १ २ २ १ २ २२ २ २ १ २

३। औहो२। औ२। जिष्ठम्पूपारा। औहोवाश्रावाः।

२२ १२ १ २ २ १ २ २

हाउ। ३। औहो२। या२त्। दिधृक्षेमाव। ज्र

२२ २ २ २ १ २ २२ १२

हस्त। औहोवारोदासो। हाउ। ३। औहो२।

१ २२ १ २ २२ २ २ १ २ १२

ओ२। भेसुशाइप्रा। औहोवापाप्राः। हाउ। ३।

१२ ११ २ २ २ १

औहो२। यो२। उऊवा३हाउ। वा३। हस॥२४॥१ ‡

---

नवाध्यायात्मक उत्तरः, ताभ्यामन्यत् एषोऽध्यायैकात्मकः आरण्यक इति व्यवहृतः। सायण-मते तु नैवम्। अयं हि पर्वोपविभागैरेव छन्दोग्रन्थं परिसमाप्य तस्यैव पर्वोपभाग एव इति मन्यते।

* ऋ० ४,७,१७,५। † "आरद्दसवम्"—इति आ० ग्रा० २,१,९।

‡ आ० पा० १प० १, १, २४।

हे "इन्द्र"!* "ज्येष्ठ" प्रशस्यतमम् "ओजिष्ठम्" अतिशयेन बलकरम् "पुपुरि" पूरकं "श्रवः" अन्नं "नः" अस्मभ्यम् "आभर" आहर प्रयच्छ। हे "वज्रहस्त" वज्रबाहो!† हे "सुशिप्र" शोभन-हनुक! एवम्भूत! हे "इन्द्र"! "यत्" "अन्नं" "दधृषेम" धारयितु मिच्छेम यस्माद् इमे परिदृश्यमाने "उभे" "रोदसी" द्यावापृथिव्यौ "आ पप्राः" आपूरयसि। तदन्नं माहरेत्यन्वयः।

"येनेमेचित्रवज्रहस्त"—इति बह्वृचानां पाठः ॥ १ ॥ १

---

* "इन्द्रतेर्वैश्वर्य-कर्मणः"—इति नैरुक्तम् (दैका० १०अ० ८ख०) ऐश्वर्यार्थमिति तद्भाष्यम्।

† "अथाकारचिन्तनं देवतानां। पुरुषविधाः स्युरित्येकं चेतनावद्वद्धि स्तुतयो भवन्ति तथाभिधानानि। अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते—'ऋष्वा त इन्द्र स्थविरस्य बाहू यत् संगृभ्णा मघवन् काशिरित्ते'। अथापि पौरुषविधिकैर्द्रव्यसंयोगैः—'आ द्वाभ्यां हरिभ्या मिन्द्र याहि कल्याणीर्जाया सुरणं गृहे ते'। अथापि पौरुषविधिकैः कर्मभिः 'अद्धीन्द्र पिब च प्रस्थितस्य आश्रुत्कर्ण श्रुधी हवम्'॥६॥ अपुरुषविधाः स्युरित्यपरमपि तु यद्दृश्यतेऽपुरुषविधं तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति। यथो एतच्चेतना-वद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भवत्यभि क्रन्दन्ति हरितेभिरासभि रिति ग्रावस्तुतिर्यथो एतत् पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव सुखं रथं युयुजे सिन्धुरश्विन मिति नदीस्तुतिर्यथो एतत् पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव होतुश्चित् पूर्वे हविरद्यमाशतेति ग्रावस्तुतिरेवापि वोभयविधाः स्युरपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्यैषचाख्यानसमयः ॥ ७ ॥"
—इति निरु० दै०।

‡ "शिप्रे हनू नासिके वा"—इति निरु० नै० ६,१७।

अथ द्वितीया।

२ ३ १ ३ १ २ ३ १र २र३र ३ १ २ ३ १ २
इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपंयदस्य।
१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ २
ततोददातिदाशुषेवसूनिचोदद्राधउपस्तु,तश्चिदर्वाक्॥२॥२

१ २ २र १ ३ १ २ १ २
*हावीन्द्राः। राजा। जगतः। चर्षणीनाम्। नाम्।
२र १र २र १र २र १र
२। नाओइनम्। ३। नाहोइनम्। ३। हावोहो
२ २ १ २ १ र २ २
हाउ। अधिक्षमा। विश्वरू। पंयदस्या। स्या। २।
२र १र २र १र १र २र १र
स्याओइनम्। ३। स्याहोइनम्। ३। औहोहावोहो २।
१ १र २ १र २ र २
ततोददा। तोश्दाशु। पाइवसूनो। नो। २।
२र १र २र १र २र १र २
नाओइनम्। ३। नाहोइनम्। ३। हावोहोहाउ।
२र १ र २ १ २ २ २र
चोदद्राधाः। उपस्तु। तश्चिदर्वा। र्वा। २। र्वा
१र २र १र १र २र १र
ओइनम्। ३। र्वाहोइनम्। ३। औहोहावोहो
२ ३ १ १ १ १
३। हाउवाङ्। ई२३४५ः॥ ८†॥

"इन्द्रसाकौ द्वौ" —इति षा० ब्रा० १,२,१०।

† आ० मा० १ प० १,१,८।

१ २ २र१ २१ २ र १
इन्द्राहाउ। राजा। जगतः। चर्षणीनाम्। नाम्।
१र र १र र १र १र १
२। नोवा। ३। नोवाहाइ। ३। हाऔ३। हा
१ २ १ २ १ र २ १
३हाउ। अधिक्षमा। विश्वरू। पंयदस्या। स्या।
१र र १र र १र १र २ १
२। स्योवा। ३। स्योवाहाइ। ३ हाऔ३। हा३हा
२ १र २ १र १ र २
उ। ततोददा। ती३दाशु। पाइवस्हजी। नौ। २।
१र र १र र १र २र २ १
नोवा। ३। नोवाहाइ। ३। हाऔ३। हा३हाउ।
१र १ र २ १ १ २ १र
चोदद्राधाः। उपस्तु। तश्चिद्वा। र्वा। २। वो
र १र र १र १र २ १
वा। ३। वोवाहाइ। ३। हाऔ३। हा३हाउ।
२ ३ १ ११ १
वा३। ई२३४५। ॥ १० * ॥ २

यः "इन्द्रः" "जगतः" जङ्गमस्य पश्वादेः यतो "राजा" ईश्वरो भवति। चर्षणीनां मनुष्याणां च † राजा भवति। किञ्च "अधि" क्षमा [ सप्तम्येकवचनस्य लुक् ‡ ] क्षमायां ¶ "विश्व-

---

* आ० गा०१,१,१०।

† "चर्षणयः"—इति मनुष्य-नामसु सप्तमं नैघण्टुकम् २, ३।

‡ "सुपां सुलुक् (पा० ७, १, ३९)"—इत्यादिना।

¶ "क्षमा"—इति पृथिवी-नामसु षष्ठं नैघण्टुकम् १, १।

अथ तृतीया।

१ ३ १ ३ १ ३ १ २ ३ २उ ३ २३क २र
यस्येदमारजोयुजस्तुजेजनेवनꣳस्वः।
१ २ ३ १ २ ३ १
इन्द्रस्यरन्त्यम्बृहत्॥ ३ ॥ ३

१ २ २ १ र २ २ १र र
* हाउयास्या। इदमारजोयू१जा २ः। तुजेजनेव
२ १ २ २
नाꣳसू१वा २ः। आइन्द्रस्या ३ ४ ५ रा ६ ५ ६। तियं
१
बृहत् ॥ ११ † ॥

रूपं" "यत्" धन मस्ति "अस्य" तस्यापि राजा भवति। "ततो ददाति दाशुषे वसूनि" यजमानाय। वसूनि धनानि ददाति। स इन्द्रः अस्माभिः "उपस्तुतं" सम्यक् स्तुतं "राधः" धनम् "अर्वाग्" अस्मदभिमुखं "चोदत्" प्रेरयतु।

"अधिक्षमा"—"अधिक्षमि"--इति, "विश्वरूपम्"--"विषुरूपम्"-इति, "उपस्तुतम्"—"उपस्तुतः"—इति च साम्न ऋचः पाठभेदः॥ २॥ २

---

* "आर्कशिरः"—इति आ० ब्रा० ७,७,१०।

† आ० गा०१प० १, २, ११।

‡ दाशुषे—इति दानकर्मणो दाशतेः (नै० ३, २०, १) रूपम् "दाश्वान् माश्वान् मीढ्वांस(८) १,१२"—इति सिद्धम्।

अथ चतुर्थी।

१ २ ३ १ २ ३ १ ९ ३ १र ३र ३ १र ३र ३ १ १
उदुत्तमं वरुणपाशमस्मदवाधमं विमध्यमꣳश्रथाय।
१ २ १ २ ३ १र १र ३ १ ३ १ १
अथादित्यव्रतेवयन्तवानागसोअदितयेस्याम ॥ ४ ॥ ४*

२र १र १ २र १ १ १
। हाउ ३। आयुश्चत्तुर्ज्योतिः। औहोवा। ई
२ १ १ २ १ २ १र
या। उदुत्तमं वरुणपाशमा२३स्मात्। अवाधमं विमध्यमꣳ
१ १ २ १र १ २ १ २ १ र १र
अथा२३या। अथादित्यव्रतेवयन्ता२३वा। अनागसोम

"रजोयुजः" ज्योतिर्भिर्युक्तस्य (ज्योतीरजउच्यतइतियास्कः ‡) अत्यन्त तेजस्विनः "यस्य" इन्द्रस्य "इदं" पुरोवर्ति स्तोत्रयुक्तं हविरस्ति तद्धविः "स्वः" स्वर्गं सर्वत्र वा "तुजे" दातरि ¶ "जने" यजमानविषये "वनं" यतो वननीयं सम्भजनीयं खलु। अतः "इन्द्रस्य" दानं "रन्त्यम्" अत्यन्त-रमणीयं "बृहत्" प्रभूतं भवति॥ ३ ॥ ३

---

* ऋ० १, २. १५, ५। † "वरुणमौनमयोरकः"—इति आ० ब्रा०२,२,१,०।

‡ "रजो रजतेः। ज्योतीरजउच्यते। उदकं रज उच्यते। लोकारजांस्युच्यन्ते। असृगहनी रजसी उच्यते। "रजांसि चित्रा विचरन्ति तन्यवः"—इत्यपि निगमो भवति"—इति निरु० नै० ४, १९।

¶ तुजे इति तुञ्जतेर्दानकर्मणो रूपम् नै० ७. १०, ९।

र २ १ २ २र १र र
दितयेसियाऽ२३मा३। वाउ। ३। आयुश्चक्षुज्योतिः।
१र १ २ १ २ ५र र २ १ १ १
औहोवा। ई२। या२३४। औहोवा। ई२३४५

॥ १३* ॥ ४

आद्ये ऋचो चतुष्पादे ह्येकपादयुतान्तिमा।
शौनःशेपो गार्त्समदो वामदेवीति ताः क्रमात्।
वारुणी पावमानी च वैश्वदेवीति संस्मृताः॥

हे "वरुण !" † "उत्तमम्" उत्कृष्टं शिरसि बद्धं "पाशम्" "अस्मद्" अस्मभ्यम् "उच्छ्रथाय" उत्कृष्टं शिथिलं कुरु। "अधमं" निकृष्टं पादेऽवस्थितं पाशम् "अव श्रथाय" अवाधस्तात् शिथिलीकुरु। "मध्यमं" नाभिदेशगतं पाशं "विश्रथाय" वियुज्य शिथिलीकुरु। "अथ" अनन्तरं हे "आदित्य" अदितेः ‡ पुत्र !

* आ० गा० १५०१, २, १२।

† "दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि। अतूर्त्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ( ऋक् १०म० ६, ४, ४ )"—इति मन्त्रलिङ्गात्—"अहोरात्रं मित्रावरुणौ ( ३का० ११प० २२अ० )"—नैरुक्तभाष्याच्च मित्र शब्देन दिवा, वरुण शब्देन च रात्रिः सूच्यः। "वरुणः वृणोतीति सतः ( ३का० १०प०३अ० )"—इति व्युत्पादनात् सर्वेषां वरुणपाशादीनां तमोरूपेण आवरकत्व।

‡ "अदितिरदीना * * 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्'—इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा"—इति नैरुक्तम् २का० ४प० २२-२३अ०। दितिः खण्डनं तदभावोऽदितिरिति निष्पन्नोऽर्थो भाष्यादि लभ्यः।

अथ पञ्चमी।

१ २ ३ १र २र २
त्वयावयम्पवमानेनसोम

१ २ ३ १र २र ३ १ २
भरेकृतंविचिनुयामशश्वत्।

१ २ ३ १र २र २
तन्नोमित्रोवरुणोमामहन्ता

१ २ ३ १ २ ३ २ ३ १
अदितिःसिन्धुःपृथिवीउतद्यौः॥ ५॥ ५*

२र १ २ २र २ ५ २
†उपायपृष्ठ। पा। श्रोहा। इ३या। (एवं त्रिः)।

२र र रर१ २ १र र १ २
त्वयावयम्पवमानेनसोमा। भरेकृतंविचिनुयामशाश्वात्।

२र र रर१ २ २ र
तन्नोमित्रोवरुणोमामहान्ताम्। अदितिःसिन्धुःपृथिवी

वरुण! "वयं" शुनःशेपाः "तव" व्रते त्वदीये कर्मणि "अदितये" खण्डन-राहित्याय "अनागसः" अपराध-रहिताः "स्याम" भवेम॥

"अथादित्यव्रतेवयन्तव"-"अथावयमादित्यव्रतेतव"—इति साम्न ऋचः पाठभेदः॥ ४॥ ४

* ऋ० ७, ४, २२, १। † "अपां मध्यम"—इति मा० ब्रा० ३,२,१२।

र २ २र१ १र २ ऽ २
उताद्यौः। हपायपृह। पा। ओहा। इ३या।

२र१ १र १ १ ३
२। हपायपृह। पा। ओहा। ई२। या२३४।

५र र २र १ २र १ १ १ १ १
औहोवा। ए। सुवः। २। ए। सुवा२३४५ः।

॥ ७ * ॥

२र१ १ २र २ २र र र
हपायपृह। पा। ओहा। (एवं त्रिः)। त्वयावयम्पवमाने

१ २ २र र१ २ २र र
नसोमा। भरेकृतंविचिनुयामशश्वत्। तन्नोमित्रोवरु

र र१ २ र१ २
णोमामहन्ताम्। अदितिःसिन्धुःपृथिवीउता। द्यौः।

२र१ १र २ २र१ २र
हपायपृह। पा। ओहा। २। हपायपृह। पा।

१ १ १ ५र र १ २र १
ओ२। हा२३४। औहोवा। सुवः। ए१। सुवः।

२१११
ए२३४५॥ ८ ‡॥ ५

*,‡ आ० गा० १प० १, १, ७-८। † "समुद्रस्य सर्पसाम"—इति आ० गा० १.२.११।

अथ षष्ठी।

३ १र २र १२७ ३ २

इमंवृषणङ्कृणुतैकमिन्माम्॥ ६॥ ६

३ २र ३र र ३ २ १ १ २

* इमाओवा। ३। इमा३। ओइ। २। इमा

१ ५ ३ २र ३र र ३ २ १

३। ओ२३४वा। वृषाओवा। ३। वृषा३। ओइ।

हे "सोम!"† पवमानेन पवित्रेण पूयमानेन "त्वया" सहायेन "भरे" [ सङ्ग्राम-नाम ( नै०२,१७,६) ] सङ्ग्रामे "पुरु" बहु "कृतं" कर्तव्यं "वयं" "विचिनुयाम" विशेषेण कुर्याम। यस्मात्तव साहाय्येन कर्माणि कुर्मः "तत्" तस्मात्, अस्मान् "मित्रः वरुणः अदितिः" एतन्नामिकाः। "सिन्धुः"‡ एतदभिधाना। तथा "पृथिवी" "उत" अपि च "द्यौः"। एते मित्रादयः "नः" अस्मान् "मा" "महन्तां" पूजयन्तु धनादिदानेन॥ ५॥ ५

---

° "वृषा"—इति आ० ग्रा० ३,२,१२।

† "सोमः सुनोतेः यदेन मभिषुण्वन्ति। बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन। तस्य पावमानीषु निदर्शनायोदाहरिष्यामः"—इत्यादि नैरुक्तम् ११ अ० २ ख०।

‡ सिन्धुः समुद्रः। समुद्र इति अन्तरिक्षनामसु पञ्चदशम् पदम् नि० १, ३।

अथ सप्तमी।

२ ३ १ २ ३ १ ३ १ २ १ २
सनइन्द्राययज्यवेवरुणायमरुद्भ्यः।

३ १२ ३२
वरिवोवित्परिस्रव॥ ७॥ ७*

१२ १ ५ २ ३२ ३२ ३२ ३२ ३२
२। वृषा३। ओ२३४वा। णाङ्कृणावता। एकाओ

२ ३२ २ १ ३२ २ १ ५
वा। एका३। ओइ। २। एका३। ओ२३४वा।

२३ १११
इन्मा२३४५म्॥ १३†॥ ६

१ ३ २ ३२ १२ २ २
‡ एजधा। तेजातमन्धसोदिविसद्भूमिया२द

१ १ १ २ २ २ १ २
दाइ। इडा। उग्रंशर्ममहा१इश्रा३वाः। सानः।

पूर्वस्या ऋचि प्रकृता हे मित्रादयो देवाः! यूयम् "एकम्" अद्वितीयं दानकर्मणि "इमं" सोमं "वृषणं" कामाना मभिवर्षकं "कृणुत" कुरुत। तथा "इमां" क्रियां फलाभिवर्षिकां कुरुत॥

६॥ ६

* ऋ० ७, १, १९, १।
† आ० गा० १प० २,१, १३।
‡ "शाकरवर्णम्"—इति आ० गा० १,२,१२।

१२ २ २ १ १ १ २
इन्द्रायययज्यवेवरुणायमरु२द्भियाः। इडा। वरिवोवि

२ २ १ १ २ १२ २ २ २
त्तरा१इस्रा२वा। आइना। विश्वान्यय आयुस्तानिमानुषा

१ २ २ १ १ २
२णाम्। इडा। सिषासन्तोवना२३होइ। माहा१२उ

१ १ १ १ १ १
वा२३। इट्। इडा२३४५॥ १८*॥ ७

गायत्री पावमान्यौ तु मन इत्यादिके ऋचौ।
अमहीयुस्तयोरेवं छन्दोदैवतनिर्णयः॥

हे सोम! † "सः" "नः" "वरिवोवित्" धनस्य लम्भकस्त्वं "नः" अस्माकं "यज्यवे" यष्टव्यायेन्द्राय "वरुणाय" ‡ "मरुद्भ्यः" ¶ च "परिस्रव" धारया क्षर॥ ७॥ ७

* आ० गा०१प० २, १, १९ ।

† "वरिवो धनं भवति वरणीयमस्य वा"—इति नि० ५का० ११ख० ४अ०।

‡ 'वरुणः कवन्धं प्र ससर्ज (ऋ०५,८,१३,३)' —इत्यादि-मन्त्र लिङ्गात् इह वरुणो मेघ-वर्षक-वायुभूतः। "कवन्धोमेघम्"—इत्यादि निघ०१०,४।

¶ "मरुतो मितराविणो वा, मितरोचिनो वा, महद्द्रवन्तीति वा इति नैरुक्तम् ११का० ११ख० १३०। 'वायु र्वै क्षेपिष्ठा देवता'—इति ऐ०ब्रा०। ततो मरुतो वायव इति सिद्धान्तः।

अथाष्टमी ।

३१र २र १२३ १ २ ३१ २
एनाविश्वान्यर्य आद्युम्नानिमानुषाणाम् ।

१ २
सिषासन्तोवनामहे ॥ ८ ॥ ८

*हाउ । ३ । उत्वातेजातमा२३न्धसा३ः । हाउ । ३ । दिविसद्भूमिया२३ददा३इ । हाउ । ३ । उग्रꣳशर्म महा२३इ अवाउ । वा३ । ई२३४डा । हाउ । ३ । सनइन्द्रायया २३ज्यवा३इ । हाउ । ३ । वरुणायमरु२३द्भियाः । हाउ । ३ । वरिवोवित्परा२३इस्रवाउ । वा३ । ई२३४डा । हाउ । ३ । एनाविश्वानिआ२३र्यआ३ । हाउ । ३ । द्युम्नानिमा नुषा२३णा३म् । हाउ । ३ । सिषासन्तोवना२३महाउ । वा३ । इट् । इडा२३४५ ॥ १२ † ॥ ८

---

* "अपत्यम"—इति आ० बा० १,२,१९ ।

† आः गा० २५० ३, १,१२ ।

अथ नवमी।

३ १ २　　१ २ ३ २ ३
अहमस्मिप्रथमजाऋतस्य
१ २ ३ १ २ ३ १ २ ३ १ १
पूर्वन्देवेभ्योअमृतस्यनाम।
३ १ १ ० ३ २३ ३ १ २
योमाददातिसइदेवमाव
३ २३ ३ १ २ ३ १ २
दहमन्नमन्नमदन्तमद्मि॥ ९॥ ९

॥ प्रथम-दशति॥

२र　　१२ र २　　२ १　　१२ १२
*हाउ। ३। मेनू͡ऽस्तर। ३। दुस्त। रान्। ३। दाने
१२ र २　　२र　　२　　र १
नादानम्। ३। हाउ। ३। अहमस्मिप्रथमजाऋता२३
२ १ १ १ १　　२र　　१र र २　　२ १
स्या२३४५। हाउ। ३। मेनू͡ऽस्तर। ३। दुस्त। रान्। ३।

"एना" एनेनान्नेन सोमेन "मानुषाणां" मनुष्याणां "विश्वानि" "द्युम्नानि" अन्नानि "अर्य." अभि गच्छन्तः† "सिषासन्तः" सम्भक्तुमिच्छन्तः वयं "वनामहे" भजामहे॥ ८॥ ८

---

° सर्वं स। मनुमास। पृथग्गतिर्वा। विशोके वा—इति बा०भा० ३,७,१०।

† "अर्यः"—इति ईश्वर नामसु द्वितीय नैघण्टुकम् ३,२२। इह तु स्वमताभिमतस्य रूपमिदम्।

२ १२ १२१
अक्रोधिनक्रोधम्। २। अक्रोधिनक्रोधम्। हाउ। ३।
१ २ १२ १२ १२
पूर्वन्देवेभ्योअमृतस्यना २ ३ मा २ ३ ४ ५। हाउ। ३।
१२ २ २ १ १ १ १ १ १२
सेतूᳬस्तर। ३। दुस्त। रान्। ३। अश्रयाश्रद्धाम्। ३।
१२२ १ २ १ २ १ २ १२
योमाददातिसइदेवमा २ ३ वा २ ३ ४ ५ त्। हाउ। ३।
१२ २ १ १ १ १ १ १२
सेतूᳬस्तर। ३। दुस्त। रान्। २। सत्येनानृतम्। ३।
१२२ १ २ १ २१२२ २
हाउ। ३। अहमन्नमन्नमदन्तमा२३श्मी२३४५। हाउ।
२१ २ १ २ १ १ १ १ २१
३। वा। एषागतिः। ३। एतदमृतम्। ३। स्वर्गच्छ। ३।
२१२१ २१२१ १ २
ज्योतिर्गच्छ। ३। सेतूᳬस्तीर्त्वाचतुरा२३४५ः॥ २४ *॥ ९
१२ २ १२२ १२१२ २१ १ १ १ १

त्रिष्टुभा अन्नदेवता आत्मान मेवाह आत्मा एव ऋषिः। "देवेभ्यः पूर्व" अग्नि-वरुणादि-देवेभ्यः पुरा "अहम्" "अन्नम्" देवता "अमृतस्य" विनाश-रहितस्य "ऋतस्य" सत्यस्य पर-ब्रह्मणः सम्बन्धिनी "प्रथमजा अस्मि नाम" प्रथमत एवोत्पन्ना

---

* आ० १प० २, १, २४।

भवामि खलु । "यः" पुमान् "मां ददाति" अन्नरूपां माम् अति-थ्यादिभ्यो ददाति "स इत्" स एव "एवं" परिदृश्यमान-प्रकारेण "आवत्" अवति सर्वान् प्राणिनो रक्षति । यस्तु लोभ-युक्तः सन् प्राणिभ्योऽन्नमदत्वा स्वय मेव तदन्नमत्ति "अन्नम् अदन्तं" नाना-विधान्न-भक्षकं तं लोभिनम् अहमन्नम् अन्न-देवता "अद्मि" भक्षयामि विनाशयामीत्यर्थः ॥ ८ ॥ ९ *

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

* अथाह यास्कः -व्याप्तं दैवतं यज्ञात्मावाप्ततत्तर्मात्मगतिं व्याख्यास्यामः ॥ सूर्य्य आत्मेत्युदितस्य हि कर्मद्रष्टायेनदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्गणः प्रवदती-न्द्रं मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा एकमस्मि प्रथमजा इत्येताभ्याम् ॥ १ ॥ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतम् म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ अह-मस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम । यो मा ददाति स इदेवमावा-अहमन्नमन्नमदन्तमद्मि इति स च ब्रह्मा प्रादुर्बभूवेत्यन्तं व्याजहाराय महानात्मानमध्या-त्मजमन्निकमन्यत्राचाचक्षते ॥ २ ॥ अपश्यं गोपामनिपद्यमानमा च परा च पथि-भिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ वरीवर्त्ति भुवनेष्वन्तः । आवरी-वर्त्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्त्वलक्षणस्तत्परं तद्ब्रह्म तत्सत्यं तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्रं तन्निष्ठो भूतात्मा । सैषा भूत-प्रकृतिरित्येके तत् क्षेत्रं तद् ज्ञानात् क्षेत्रज्ञमनु प्राप्य निरात्मकं अथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी इति । कामद्वेषसत्यविज्ञानस्य विष्वक्रतो विभूतिं कुर्वतः क्षेत्रज्ञ-पृथक्त्वाय कल्पते प्रतिभाति लिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्तमोऽपि निय-

पचित आकाशः ॥ ३ ॥ आकाशगुणः शब्द आकाशाद्वायुर्द्विगुण स्पर्शेन वायो
र्ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेनाद्भ्यः पृथिवी पञ्चगुणा गन्धेन
पृथिव्या भूतग्रामस्थावरजङ्गमास्तदेतदहर्युगसहस्रं जागर्त्ति तस्यां ते सुषुप्स्यमानानि
प्रत्याहरति भूतग्रामाः पृथिवी मपि यन्ति पृथिव्यप आपो ज्योतिष ज्योतिर्वाय
वायुराकाश माकाशो मनो मनो विद्यां विद्या महान्त मात्मानं महानात्मा प्रतिभां
प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावेतावहोरात्रावजस्रं परिवर्त्तेते स
कालस्तदेतदहर्भवति। युगसहस्रपर्यन्त महर्यद् ब्रह्मणो विदुः रात्रिं युगसहस्रान्तां
तेऽहोरात्रविदो जना इति ॥ ४ ॥ तं परिवर्त्तमान मन्योऽनुप्रवर्त्तते स्रष्टा द्रष्टा विभ
क्तातिमात्रोऽहमिति गम्यते स मिथ्यादर्शनेदं पावकं महाभूतेषु चिरोषु आकाशाद्वायोः
प्राणश्चक्षुश्च वक्तारश्च तेजसोऽद्भ्यः स्नेहं पृथिव्या मूर्त्तिः। पार्थिवांस्त्वष्टौ गुणान्वि
द्यात त्रीन्मात्रतस्त्रीन् पितृतो ऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृ-
तोऽन्नं पान मित्यष्टौ सोऽयं पुरुषः सर्वमयः सर्वज्ञानोपि क्लृप्तः ॥ ५ ॥ स यद्यनु-
रुध्यते तद्भवति। यदि धर्ममनुरुध्यते तद्देवो भवति यदि ज्ञानमनुरुध्यते तदमृतो
भवति यदि काम मनुरुध्यते स च्यवते। इमां योनिं सन्दध्यात्तदिदमेव मतम्—
श्लेष्मा रेतसः सम्भवति श्लेष्मणो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो
मेदसः स्नावा स्नाव्नोऽस्थीन्यस्थिभ्यो मज्जा मज्जातो रेतस्तदिदं योनौ रेतः सिक्तं पुरुषः
सम्भवति। शुक्रातिरेके पुमान् भवति शोणितातिरेके स्त्री भवति द्वाभ्यां समेन
नपुंसको भवति शुक्रभिन्नेन यमो भवति शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च
सत् कथमिदं शरीरं परं सयुज्यते सौम्यो भवत्येकरात्रोषितं कललं भवति पञ्च-
रात्राद्बुद्बुदाः सप्तरात्रात्पेशी द्विसप्तरात्रादर्बुदः पञ्चविंशतिरात्र: स्वस्थितो घनो
भवति मासमात्रात् कठिनो भवति द्विमासाभ्यन्तरे शिरः सम्पद्यते मासत्रयेण
ग्रीवाव्यादेशो मासचतुष्केण त्वग्व्यादेशः पञ्चमे मासे नखरोमव्यादेशः षष्ठे मुख
नासिकाक्षिश्रोत्रं च सम्भवति सप्तमे चलनसमर्थो भवत्यष्टमे बुद्ध्याध्यवस्यति नवमे
सर्वाङ्गसम्पूर्णो भवति ॥ मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नाना योनि
सहस्राणि मयोषितानि यानि वै ॥ आहारा विविधा भुक्ताः पीता नानाविधा-
स्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा॥ अवाङ्मुखः पीड्यमानो
जन्तुश्चैव समन्वितः। सांख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकमिति ॥ ततश्च
दशमे मासे प्रजायते जातश्च वायुना स्पृष्टश्च स्मरति जन्ममरणम्। कर्म च

शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ ॥ अष्टोत्तरं सन्धिशतं सहाकपालं शिरः सम्प-
द्यते षोडश वपापत्राणि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्माणि अर्धचतस्रो रोमाणि
कोट्यो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा हस्तौ ह्यष्टसुपर्णौ तथोपस्थ-
ऽदपाद्यैतत् मूत्रपुरीषं कस्मादाहारपानसिक्तत्वादनुपचितकर्माणावन्योन्यं जायेते
इति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्यक्तागमनमपि तथौ जरामरण-
क्षुत्पिपासाः शोक-क्रोध-लोभ-मोह-मद-भय-मत्सर-हर्ष-विषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभि-
भूयमानः सोऽस्मादार्जवं जवीभावामात्मन्निर्मुच्यते सोऽस्मात्यात्र महाभूमिकावच्छरीराणि-
शेषमार्गैः प्रक्रम्य प्रकृतिरधिपरीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलं मनु-
भूय तस्य संक्षये पुनरिमं लोकं प्रतिपद्यते ॥ ७ ॥ अथ ये हिंसामाश्रित्य विद्याम्
उत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभि सम्भवन्ति
धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षम् अपक्षीयमाणपक्षाद्दक्षिणायनं दक्षिणायनात्
पितृलोकं पितृलोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं वृष्टेरोषधयश्चैतद्भूत्वा तस्य
संक्षये पुनरेवेमं लोकं प्रतिपद्यते ॥ ८ ॥ अथ ये हिंसामुत्सृज्य विद्यामाश्रित्य
महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभि सम्भवन्त्यर्चिषोऽहरह्न आपू-
र्यमाणपक्षम् आपूर्यमाणपक्षादुदगयनमुदगयनाद्देवलोकं देवलोकादादित्यमादित्या-
द्वैद्युतं वैद्युतान् मानसं मानसः पुरुषो भूत्वा ब्रह्मलोकमभिसम्भवति न ते पुनरावर्त्तन्ते
शिष्टा दन्दशूका यत इदं न जानन्ति तस्मादिदं वेदितव्यमथाप्याह ॥ ९ ॥ न तं
विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव। नीहारेण प्रावृता जल्प्या
चासुतृप उक्थशासश्चरन्ति ॥ न तं विद्यया विदुषो यमेवं विद्वांसो वदन्त्यक्षरं
ब्रह्म पश्यन्ति अन्यद्युष्माकमन्तरमन्यदेषामन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या
चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्त्यविद्वांसः क्वेयम् मत्व प्र वदन्त्यथा
यो विद्वांसः ये वशीनु कम्पते तस्य तपसा महाप्रमादमेत्यधुःमयो भवति तेना सम्पत
जिह्वेतेन सुखी भिषक्ते देव वि मता यं स्तः सम्प्रातानि भूतं भवद्भविष्यदिति। ज्ञाता
कस्माज्जायते सखा कस्मान्मुच्यते सह भूतेन्द्रियैः शेते महाभूतानि सेन्द्रियाणि प्रज्ञया
कर्म कारयति इति वा तस्य तपः प्रतिष्ठामीश मुपास्य आत्मा ब्रह्मेति स ब्रह्मभूतो
भवति साक्षिमात्रो व्यवतिष्ठते यश्चो ज्ञानकृतः ॥ —इति १४,१—१०।

अथ द्वितीय-खण्डे—

सैषा प्रथमा।

२ ३ १ २ ३ २ ३ १ २
त्वमेतदधारयःकृष्णासुरोहिणीषुच।
१ २ ३ २ ३ १ २
परुष्णीषु*रुशत्पयः॥ १॥ १० †

१२ २ २२ १ २ १ २ ३ ५
‡ हाउत्वमेतात्। एतदेतात्। आधारा२३४याः।
२ १२ २ २ २ २ २१ २ २१ १
कृष्णासुरोहिणा१इषू२चा। परुष्णा२३ईषू। रुशत्। पा
३ ५२ २
२या२३४औहोवा॥२०॥

२२ १ १ १ १ २ १
त्वमेतद्धोवाइ१ होइ। आधा१राया२ः। हाइ।
१ २ १ १ २ १
कार्ष्णा१सुरो२। होइ। हाइणी१षुचा२। होइ।
१० १ २१ १ २ ५२२
पारुष्णाइषू२। होइ। रुशत्। पा२या२३४औहोवा॥२१॥
२२ २ १ २ १
हाईत्वमेतात्। आ। आधा१राया२ः। हाइका
२ १ २ १ १ ०
र्ष्णा१सुरो२। हाइहाईणी१षुचा२। हाईपारुष्णा

* "पुरुष्णीषु"—इति ऋ०। † ऋ० ७,६,२२,२।

‡ "श्रौषि गार्भावतानि"—इति गा० ग्रा० १, २, १५।

१ २ १ १ २ ५ र र १ १
दुष्र्२। आइ। रुशत्। पा२या२३४औहोवा। अभि

र २ १ १ २ १ र २र १ र २ १ १ १ १ १ १ र
स्फूर्जयं द्विष्मः। समोषाभिस्फूर्जयं द्विष्मः। अस्मभ्यङ्गातु

१ २ २ १ १ १ १
वित्तमा२३४५म ॥ २२ * ॥ १०

श्रुतकक्षऋषिरिन्द्रो गायत्री। अस्य सामर्थ्यमेवोपपादयति—हे इन्द्र! "कृष्णासु" कृष्णवर्णासु गोषु तथा "रोहिणीषु च" ["वर्णादनुदात्तात्तोपधात्तोनः (४,१,३९)"-इति ङीप्†] "परुष्णीषु" रोहितवर्णासु ["परुष्णी पर्ववतीति यास्कः‡] पर्वगः पर्वभो नानावर्णासु च गोषु "रुशत्" [रोचतेर्दीप्तिकर्मणः¶] दीप्यमानं श्वेतम् "एतत्" परिदृश्यमानं "पयः" क्षीरं त्वम् "अधारयः" धारयसि। तस्मात् तद्बलं पूजयाम इति समन्वयः ॥ १ ॥ १०

---

* आ० २प्र० २, २, १०—१२ ।

† अनुदात्तस्तु "वर्णानामन्तिनितान्तानाम् (२ पा०१०सू०)"—फिट् सूत्रे ।

‡ "इरावती परुष्णीत्याहुः पर्ववती भास्वती कुटिलगामिनी"—इति निरु०९,२६ ।

¶ "रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा"—इति यास्कः नै० २,२०—नै० ६,१३ ।

अथ द्वितीया।

१२ १२३ १२४ ३१
अहरुचदुषसः पृश्निरग्रिय

३१ २ ३१२ ३२
उक्षा मिमेति भुवनेषु वाजयुः।

३ १२ ३१२
मायाविनो ममिरे अस्य मायया

३१२ १२३ २३१२
नृचक्षसः पितरो गर्भमादधुः॥ २॥ ११ *

२र १ १ १र२
†· हाउ। ३। स्वर्विश्वम्। ३। अहरुचत्।

२१ १ २र १ २
।३। उषसःपृश्निरा२ग्रायाः। हाउ।३। स्वर्विश्वम्।३।

१र १र २१र १ २र १
उक्षा मिमे।३। तिभुवनेषुवा२जायूः। हाउ।३। स्वर्वि

१ १र र २ १र १ २र
श्वम्।३। मायाविनः।३। ममिरेअस्यमा२याया। हाउ

१ १ १ १ २१र १
।३। स्वर्विश्वम्।३। नृचक्षसः।३। पितरोगर्भमा२दा

* उ० १,१,१६,२।

† "सर्वोमितो वं"—इति भा० प्रा० २,२,११।

धूः । हाउ । ३ । स्वर्विश्वम् । २ । सुवा२३र्विश्वाउ । वा३ ।
ए३ । सुवा२३४५: ॥ ८* ॥

हाउ । ३ । ज्योतिर्विश्वम् । ३ । अरूरुचत् । ३ । उष
सःपृश्निरा३ । अग्रायाः । हाउ । ३ । ज्योतिर्विश्वम् । ३ ।
उक्षामिमे । ३ । तिभुवनेषुवा३ । जायूः । हाउ । ३ ।
ज्योतिर्विश्वम् । ३ । मायाविनः । ३ । ममिरे अस्यमा३ ।
या या । हाउ । ३ । ज्योतिर्विश्वम् । ३ । नृचक्षसः । ३ ।
पितरोगर्भमा३ । दाधूः । हाउ । ३ । ज्योतिर्विश्वम् । २ ।
ज्योता२३इर्विश्वाउ । वा३ । ए३ । ज्योती२३४५: ॥१०†॥११

अरूरुचदिति त्वेतां पवित्रो दृष्टवानृषिः ।
पवमानो देवता स्याच्छन्दश्च जगती स्मृता ॥

"उषसः" सम्बन्धी "पृश्निः" आदित्यः ‡ [ "पृश्निरादित्यो

---

*, † आ० गा० ४प० ३, १, ९-१० ।

‡ "तथापि निगमो भवति 'समुद्रो' अर्णोतु नः' इत्युपम सन्धा समार आद् आदित्यर्थादमवरवाद्दापि"—इति निरु० नै० २,१६ ।

भवति प्राप्नुत एनं ( नै० २,१४ ) वर्णः"-इति नैरुक्ताः ]"अग्रि-यः" अग्रगी मुख्यः सोमः * "अरूरुचत्" रोचयति। सः "उक्षा" जलस्य सेक्ता पर्जन्यः सन् "मिमेति" भृशं शब्दायते। "भुव-नेषु" भूतजातेषु "वाजयुः" तेषा मन्न मिच्छन्। "मायाविनः" माया प्रज्ञा तद्वन्तो देवाः "अस्य" सोमस्य "मायया" प्रज्ञया "ममिरे" निर्मितवन्तः [ सोमस्य एकैकांश-पान-वशात् अग्न्या-दयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः ]। तस्यास्य मायया "नृचक्षसः" नृणां द्रष्टारः "पितरः" पालकाः देवाः † अङ्गिरसः‡ पितरो वा "गर्भम्" "आ दधुः" धारयन्ति ओषधीषु। [ स चात्र सूर्य्यात्मा सोमः स्तूयते। सूर्यरश्म्यनुगमाधीनवर्द्धना-च्चन्द्रस्य। यद्वा। अयमुषसः पृश्निः सविता अरूरुचत् रोचयति रोचते वा सर्वं शिष्टं समानं तत् सम्बन्धिनो नृचक्षसो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भ मादधुर्वृष्ट्यर्थम् ॥

"मिमेतिभुवनेषु" - "बिभर्तिभुवनानि"—इति साम्न ऋचः पाठ-भेदः ॥ २ ॥ ११

---

* "अपगमनेनेति वा अरणेनेति वा अपमन्यादिन इति वा। अपि वाप मित्येतद-नर्थक मुपबन्ध माददीत"—इति निरु० नै० ६,१६।

† "पिता पाता वा पालयिता वा"—इत्यारभ्य "पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः"-इत्यन्तं यास्कः नै० ४,२१।

‡ "अङ्गारेष्वङ्गिराः। अङ्गारा अङ्कना अञ्चना"-इतिनिरु० नै० ३,१७।

अथ तृतीया।

२ ३ १ २३ ३ २ ३ १ २ १ १ २ ३ १ २
इन्द्र इद्धर्य्योःसचासम्मिश्लआवचोयुजा।
१ २ ३१ २ ३ १ २
इन्द्रोवज्रीहिरण्ययः॥ ३॥ १२ *

१ १ १२र १र २१ १ १ २१र २
। इन्द्रमिद्गाथिनोबृहत्। ए२। इन्द्रमर्कैभिः। अर्किः
१ १र र र र र र र र २र १ १ २
णोवा। औहोवाऔहोवाऔहोवा। औहोहाइ। ३। इन्द्रं
र र १ २ २ ५ २र १र र
वाणीरनू२३पताउ। वा३। ई२३४डा। औहोवा। ३। औ
१ २ २ १ २ २ र १
होहाइ। ३। इन्द्रइद्धर्य्यो२३ःसचा३। सम्मिश्लआवचो२३यु

हयोर्मधुच्छन्दा वैश्वामित्रः द्रष्टा स्यार्द्दं गायत्री छन्दः इन्द्रो देवतेति। "इन्द्र इत्" इन्द्र एव "हर्यो:" हरिनामकयोरश्वयोः † "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यङ्मिश्रयिता। कीदृशयोः हर्योः? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः। अयम् "इन्द्रः" "वज्री" वज्रयुक्तः "हिरण्ययः" हिरण्मयः ¶ सर्वाभरणोपेतइत्यर्थः॥ ३॥ १२

* उ० २, १. ८, ३=ऋ० १. १, १२, २—३।

† "चवचम्"—इति चा० बा० ३.२.१३।

‡ "हरी इन्द्रस्य"—इति नि० नै० १, १५. १।

¶ "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि"—इति पा० ६. ४, १७५।

अथ चतुर्थी।

२ ३ १ २ ३ १ २
इन्द्रवाजेषुनोवसहस्रप्रधनेषुच।
२ ३१ १ २ ३ १ २
उग्रउग्राभिरूतिभिः॥ ४ ॥ १३ *

२ २र र र २र १ २ २ र र १
जा३। औहोवा। ३। औहोहाइ। ३। इन्द्रोवज्रीहि
१ ५ २र र र २र
रा२३ण्ययाउ। वा३। ई२३४डा। औहोवा। ३। औ
१ २ २ र र१ २
होहाइ। ३। इन्द्रवाजेषुनो२३अवा३। सहस्रप्रधना
२ २र र र २र १ २ १ र
२३इषुचा३। औहोवा। ३। औहोहाइ। ३। उग्रउग्रा
१ २ २ १ १११
भिरू२३तिभाउ। वा३। इट्। इडा२३४५॥ ११ ॥ १२.१३

हे "इन्द्र"! "उग्रः" शत्रुभिरप्रधृष्यस्त्वं "उग्राभिः" अप्रधृष्याभिः "ऊतिभिः" अस्मद्रक्षणपराभिः "वाजेषु" युद्धेषु † "नः" अस्मान् "अव" रक्ष तथा "सहस्रप्रधनेषु च" सहस्रसङ्ख्याक-गजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष॥ ४ ॥ १३

* ऋ० ८, ८, ३९, १।
† आ० गा० १५० २, १, ११।
‡ "वाजे"—इति सङ्ग्रामनामसु द्विचत्वारिंशत्तमं नैघण्टुकम् २। १७।

अथ पञ्चमी। •

१ २ ३ १   १ २ १ २ ३ १ २
प्रथश्चयस्यमप्रथश्चनामा
२र   ३ १ २ ३ २
नुष्टुभस्यहविषोहविर्यत्।
३ १ २र   ३ २ ३ १ २
धातुर्द्युतानात्सवितुश्चविष्णो
३ १ २र ३ १ २
रथन्तरमाजभारावसिष्ठः॥ ५॥ १४ *

१ २ १ २ २ १
† हाउप्राथाः। चयस्यमप्रथः। चना२। मा३उवा३।
२ र १ ३ ५ ३ ५ २र २
ई२हा। ३। ऊवा२। ओ२३४वा। ई२३४डा। आनुष्टुभस्य
१ २ १ २ १ २र १
हविषः। हवा२इः। या३उवा ३। ई२हा। ३। ऊवा२।
३ ५ ३ ५ २र १ र २र १ २
ओ२३४वा। ई२३४डा। धातुर्द्युतानात्सवितुः। चवा-
२ २ २र र ३ ५
२इ। ष्णा३उवा३। ई२हा। ३। ऊवा२। ओ२३४वा।
३ ५ २ १ २ २र र १ २ २
ई२३४डा। रथन्तरमाजभारा। वमा२इ। ष्ठा३उवा३।
२र र १ ३ ५ ३ ५ २
ई२हा। ३। ऊवा२। ओ२३४वा। ई२३४डा। ए३।
१
द्युत्॥ ५॥

* ऋ० २, ८, ७, २। † "वसिष्ठस्यैकं द्रुं" इति आ०ब्रा० ३, १, १९।

१ २ १ । २ २
प्राथाः। चयस्यमप्रथः। चना२। मा३१उवार३।
२र र १ र २र २ ५
इडा। ३। होइ। हो। वाहा३१उवार३। ई२३४हा।
१र २ १ २ १ २ २र र
आनुष्टुभस्यहविषः। हवा२इः। या३१उवार३। इडा। ३।
१ र २र २ ५ २र १ र २र
हाइ। हो। वाहा३१उवार३। ई२३४हा। धातुद्युताना
१ २ २ २र र
त्सवितुः। चवा२इ। ष्णा३। उवा३। इडा। ३।
१ र २र ७ ५ २ १
होइ। हो। वाहा३१उवार३। ई२३४हा। रथन्तर
र २र र १ १ २ २र र
माजभारा। वसा२इ। ष्ठा३१उवा३इ। इडा। ३।
१ र २र २ ५ १ १ २
होइ। होवाहा३१उवार३। ई२३४हा। ए३। द्यूता
१ १ १ १
२३४५ः॥ ६ †॥ १४

अपश्यत् प्रथइत्येतां त्रिष्टुभं प्रथनामकः।
वैश्वदेवीं भवेदेतं छन्दो दैवतनिर्णयः॥

"यस्य" वसिष्ठस्य "प्रथः" नाम पुत्रः यस्य भरद्वाजस्य "स प्रथः नाम" पुत्रः तयोर्मध्ये "वसिष्ठः" मम पिता "अनुष्टुभस्य" अनुष्टुप् छन्दसा युक्तस्य "हविषः" घर्माख्यस्य "यद्धविः" हविष्टा

† आ० ना० २य० ३, १, ५—६।

अथ षष्ठी।

३ १ १     १ १ २ ११ २   ३ १ २
नियुत्वान्वायवागह्ययꣳशुक्रोअयामिते।
१ २     १ १ १ २
गन्तासि*सुन्वतोगृहम्॥ ६॥ १५

१२   २ १   ११   २   २ १
†हाउ। ३। शुक्रम्। ३। शुक्रꣳशुक्रम्। ३। शुक्रꣳ
२   २ १ १२   २ १ १   १ १
शूक्रम्। २। शुक्रꣳशूक्रम्। नियुत्वान्वायाऽवागा१
२   २   १ २   १२
ही२। अयꣳशुक्रा आ३यामा१ता २इ। गन्तासि
१ २   १२   २ १   २
सुन्वा३तोगृहा१हा२३म्। हाउ। ३। शुक्रम्। ३। शु-
१   २   २ १   २   ३ २ १ १
क्रꣳशुक्रम्। २। शुक्रꣳशुक्रम्। शुक्रꣳशूक्रम्। २

पादकं "रथन्तरं" साम तद्रथन्तरं "धातुः" धातुसञ्ज्ञादेवात्‡ "द्युतानात्" द्योतमानात् सवितुश्च¶ विष्णोश्च§ "आजहार" आहृतवान्। [ रथन्तरमिति भत्वं रथशब्दोपपदात् तरतेः संज्ञायां भृतॄवृजीति खच्। अरुर्द्विषदजन्तस्येति मुमागमः॥ ५॥ १४

* "गन्तासि"—इति क०।

† "शुक्रम्"—इति चा० ब्रा०३,२,१९।

‡ 'धाता-विधाता' सर्वस्य इति नैरुक्तम् ३का० ११ख० १०वा०।

¶ 'सविता सर्वस्य प्रसविता' इति नैरुक्तम् ३का० १०ख०३१वा०।

§ 'विष्णु र्विशतेर्वा व्यश्नोतेर्वा'—इत्यादि नैरुक्तम ३का० ११ख० १४वा०। एतस्य विष्णुशब्देन सर्वव्यापी सर्वात्मा परमात्मेति सिद्धान्तः।

अथ सप्तमी ।

१ २र ३ १ २ ३ १ २
यज्जायथाअपूर्व्य मघवन् वृत्रहत्याय ।
१ २ ३ १ २ ३ १ ० ३ १ २र
तत्पृथिवीमप्रथयस्तदस्तभ्नाउतोदिवम् ॥ ७ ॥ १६ *

॥ द्वितीय-दशति ॥

२ ३ १ ३ ५र र २र ३ १
शुक्रम् । शूर । क्रा२३४ । औहोवा । ए । शुक्रम् ।
३ ॥ ७† ॥ १५

नियुत्वानिति गायत्र्या वंश्यं गृत्समदोऽब्रवीत् ॥

हे "वायो" ! ‡ "नियुत्वान्" नियुतो वाहनानि [ वायोः नियुतोरिति ( १,१५,१० ) निघण्टुः ] तैर्युक्तस्त्वं "आगहि" आगच्छ । "अयं" "शुक्रः" दीप्यमानः सोमः ते तुभ्यं "अयामि" [ यामेः कर्मणि लुङि रूपम् ] नियतो गृहीत आसीत् यतः 'सुन्वतः' सोमाभिषवं कुर्वतो यजमानस्य "गृहं" "गन्तासि" यातोसि ॥ ६ ॥ १५

* उ० ९, १, १९, १=ऋ० ८, ८, १२, ५ ६—७— ऊह्य १, २, १६=१, १, ९= २, २, १६ ।

† आ० ग्रा० २प० ३, २, ७ ।

‡ 'वायुर्वातेर्वेतेर्वा स्याद् गति कर्मणः' इत्यादि नैरुक्तम् १०.१ खण्डः ।

२र र १२ १ २ २ १ १
* एयज्जायथाः । अपूर्विया । हाउ । मघवन्वृ । हा-
२ १र २ २ १ १ १
उ । त्रहत्याया । हाउ । तन्पृथिवीम् । हाउ । अ-
१ २ २र र र र १ २ २ १
प्रथयाः । हाउ । एओहोवाहोशाः । तदस्तम्नाः ।
२ २र १ २ २र र २ १
हाउ । उतोदिवाम् । हाउ । एओहोवा३ । अस्
१ १ १
पया२३४५: ॥ ९ ॥

२र र र २र १ १ १
एहाउयज्जायथाः । अपूर्विय्म । होइ । ३ । हाउहाउ-
१ २ १ १ २५ २ १र
हाउ । मघवन्वृ । होइ । ३ । हाउ३ । त्रहत्याया ।
१ २५ २ १ १ २५
होइ । ३ । हाउ३ । तन्पृथिवीम् । होइ । ३ । हाउ
२ १ १ २५ २र र र १ २
३ । अप्रथयाः । होइ । ३ । हाउ३ । एओहोवाहोशाः ।
२ १ १ २५ २ र १ १
तदस्तम्नाः । होइ । ३ । हाउ३ । उतोदिवाम् । होइ ।
२५ २र र र १ १ १ १
३ । हाउ३ । एओहोवा३ । अस् पया२३४५: ॥ १० ॥

वायोः षट् सामानि—इति सा० सा० १, २, १९ ।

२र र १र १ र २ र १
एहाउ। औहो२। यज्जायथा३ः। अपूर्विया। हो
१ १ १ र १ १
वया२३होइ। मा। घवन्वृत्रहत्याया। होववा२३हो
१ १ र १ १ २र र
इ। तात्। पृथिवीमप्राथयाः। होववा२३होइ। एऔ
र र १ १ १ १ १ १ र र
होवाहोभाः। होववा२३होइ। तात्। अस्तभ्नाउतो
१ १ २र र र १ र
दिवाम्। होववा२३होइ। एऔहोवा३। हस्इडापया
१ १ १ १
२३४५ः॥ ११ ॥

१ १ १ १ १र र २ २ १ १
याज्जायाज्जा। यथाअपूर्वियाऔ३हो। हा२इया।
२ २ १ र २ १ १ १ २
औ३हो। माघवन्वृत्रहत्यायाऔ३हो। हा२इया। औ३
१ १ र १ २ १ १ २ १
हो। तात्पृथिवीमप्राथयाऔ३हो। हा२इया। औ३हो।
१ र र २ २ १ १ २
तादस्तभ्नाउतोदिवा। मौ३हो। हा२इया। औ
र र १ १ १११
३होवाहाउवा३। पया२३४५ः॥ १२ ॥

२ १र १ १ १ २ १ १ १ १ १ १
ऊ। वोहो१इ। ३। यज्जायथाः। अर्विपूया। म

१ २१ २१ २र१ ११२१ ११२१ २
द्यावन्व। चहत्याया। नत्पृथिवीम्। अप्राथयाः। त

११ १ २१२१ २ १र २ २
दस्तम्भाः। उतोदिवाम्। ऊ। वौहो१इ। २। ऊ।

१र२ १ २ २ २ १
वौहो१२। उहुवा३हाउ। वा३। हस्॥१३॥

२र र २ ५ ५ २र १
योरयिंवोरा३यिन्तमाः। योद्युम्ना२३४इर्द्यू। म्नाव

२ ५ ५ २र१ २ २
त्तमार२३ः। सोमःसु२३४ता। मा३इन्द्रतायेउ। अस्ति

२ ५ ३२ १ ५ ५
स्वा२३४धा। पतें३। मा२३४दाः। उहुवा६हाउ। वा।

१
अस्॥१४॥

१र र २ २ २ १
*हाउहौहाइ। ३। अन्तरिक्षमुवर्दिवस्पग। न्मा।

१र र२ १र र २ १
(त्रिः)। परात्परमैरय। ता। परात्पर। मैरय। ता।

१र र २ २ १र ३र२ २ ३र २ १र
परात्परमैरय। त। औहोवाहाउ। वा। ए। यज्ञो

२१र२र १र र२१र २र १र र
दिवोमूर्द्धादिवमादनोघर्मोज्योतिः॥१५॥

---

* "त्रिस्तोभोमि सतोबारि" — इति ब्रा० ब्रा० ३, ६, १८।

१र र २ १ २ १ २ १
हाउहोहाइ।३। अन्तरिक्षᳪसुवर्दिवञ्जग। न्मा।
१ र र २ १ १र र २
(त्रिः)। परात्पर मैरय। ता। परात्पर मैरय।
१ १र र २ २ १र ३र २
ता। परात्पर मैरय। त। औहोवाहाउ। वा।
२र २ १ २ १र र २ १र २ १र२र १ र २र
ए। पृथिव्यन्तरिक्षन्द्यौरापःकनिक्रदात्सिन्धुरापोमरुतोमा
र १र र
दयन्ताङ्घर्मोज्योतिः॥ १६॥

१र र १र २ १र र र
हाउहोहाइ (इत्यादिपूर्वपाठः) ता। दिवोमूर्द्धानᳪ
र १ १ २ २ ५ १ र २ १र र
स मैरयन्। होये३। हो२३४वा। यशोघर्मोज्यो
र २ १ १ ३ ५ १र र
तिः। यशःसमैरयन्। होये३। हो२३४वा। तेजो
२ १र र १र र १ १ २ ३
घर्मोज्योतिः। तेजःसमैरयन्। होये ३। हो २ ३
५ १ २ १र र १ र २ १ २
४वा। सुवर्घर्मोज्योतिः। सुवःसमैरयन्। होये३।
२ ५ १र २ १र र १र र १
हो २ ३ ४ वा। २। ज्योतिर्घर्मोज्योतिः। ज्योतिःसमैर
१ २ २ २ १२ २ १र र
यन्। होये३। हो२३४५वा६५६। घर्मोघर्मोज्यो
तिः॥ १७॥

१र र  १ऽ १र ३र१ २
* हाउहोहाइ (इत्यादि) ता। औहोवाहाउ। वा

२र १ र २ १ २ २र १ २ १र र २ २र १ र
ए। इडायच्छदस्कृतिंयच्छ। ए। मनओजोयच्छ। ए। मनो

२ १र २ २र १ २ २र २ १र र १
महिमानंयच्छ। ए। यशस्विपियच्छ। ए। प्रजवर्चायच्छ।

२र १र २ २र १ २ १ १ २र १ र
ए। पशून्विशंयच्छ। ए। ब्रह्मनत्रंयच्छ। ए। स्वर्ज्योति

२
यंच्छ ॥ १८ ॥

१र र १ऽ २ र र
हाउहोहाइ। (इत्यादि) ता। यज्ञायथा। अ

र १ २ २ १ २ २ र र १
पूर्वाया। मघवन वृत्रहत्याया। या। तत्पृथिवीमप्राथा

२ २ र र १ २ १२ र
याः। तदस्तम्भाउतोदाइवाम्। हाउहोहाइ (इत्या

२ १र ३र २ र २र १र र र१ र
दि) त। औहोवाहाउ। वा। ए। तंजाघर्मः सङ्क्री

२ र १ २ र र २ र र १र २ र १ २ १ ३र
डन्तेगिरामतीर्वायुगोपास्तेजस्वतीमंरुद्भिर्भुवनानिचक्रदुः।

१ १ १ १ १ ३ १ १ १
इट् इडा२३४५। ई२३४५ ॥ १८ ॥

---

* 'प्रजावनमानम्'—इति च्छा० ब्रा० ३,१,३,१८

१र र १र र २ १ १र
हाउहोवा। ३। परात्परमैरय। ता। परात्प
र १ १ १र र २ २ १र २र २
रमैरय। ता। परत्परमैरय। त। औहोवाहा
१ १ २ २र १ १र र २र १
उ। वा। इन्द्रो। धेनुः। ३। आपो धेनुः।
१र २र १ २ १ २र १ १र
३। भूमि र्धेनुः। ३। अन्तरिक्षंधेनु। ३। द्यौ
२र १ १ २र २ १ २र १
र्धेनुः। ३। परं धेनु। ३। व्रतं धेनु। ३।
२ १ २र १ १ २र १ १ र
सत्यं धेनु ३। ऋतं धेनु। ३। इडा
२र १ १ २र १ १र २र १
धेनुः। ३। स्व र्धेनुः। ३। ज्योति र्धेनुः।
३ ॥२०॥

१र र १ऽ २ १र २र
हाउहोवा। ३। (इत्यादि) ता। यज्ञा यथाः।
२१र र २१र २ १ २ ७ ५ १ २
अपूर्विया।. अपूर्विया३। आपूर्वा२३४या। मघवन्वृ।
२१ र२ २१ र २ १ २ १ ५ १
त्रहत्याया। त्रहत्याया३। त्राहत्या२३४या। तत्पृ
२१र र २ १ २ १ २ ३ ५
थिवीम्। अप्राथयाः।· अप्राथया३ः। आप्राथा२३४याः।
१ २ र २१र २ १ २ २ १ २
तदस्तभ्नाः। उतोदिवाम्। उतोदिवा३म्। ऊतो

हा२३४इवाम्। हाउहोवा। ३॰। (इत्यादि) न।
औहोवाहाउ। वा। तेजोघर्मःमह्नोऽन्तेवायुर्गोपास्ते
जस्वतीमरुद्भिर्भुवनानिचक्रदुः॥ २१॥

हा२ऊवाक्। ३। होवा। २। होवा३। हाउवा।
ए। तोकम्प्रजाङ्गर्भो नायमदधुर्ध्याचपराचपथिभिश्चर
न्ता२३४५ः॥ २२॥

*हा२ऊवाक्। ३। होवा। ३। अयꣳमग्निङ्ते३।
होइ। यस्माद्यावापृथिवी भुवनानिचक्रदुः। हो
इ। अयꣳसग्निङ्ते३। होइ। यस्मादापओषधयोभुव
नानिचक्रदुः। होइ। अयꣳमग्निङ्ते३। होइ। यस्मा
त्समुद्रियाभुवनानिचक्रदुः। होइ। अयꣳसग्निङ्ते३।
होइ। यस्माद्विश्वाभूताभुवनानिचक्रदुः। होइ। हा

* "यज्ञसामम्" — इति आ० ब्रा० ३,१,१९।

१ १ १ १ २र १ १

२ऊवाक्। ३। होवा३। हाउवा। ए। आपः। २।

३ १११

आपा२३४५: ॥ २३ ॥

१ १ १ १ ३र ३ २र १

हा२ऊवाक्। ३। होवा। ३। येभिर्वियाँ। अमैरा

२र ३ १र १ २र र २

या२:। तेभिर्विया। अदीमादा२म्। येभिर्भूताम्।

३ २ १ १र १र२ १र २ १र २र १

सद्यःमाहा२:। तेभिस्तेजआपः। आपा२। येभिर्व्यं

२१र २ २ २र १ २ १ ३

न्तरिक्षमैरया३ः। हाउवा। ए। आपः। २। आपा

१११

२३४५: ॥ २४ ॥

१ १ १ १ १ र र

हा२ऊवाक्। ३। होवा। ३। यज्जायथा। अ

१ १ १ १

पूर्व्या२। वीया२। मघवन्वृत्रहाहो२। त्याया२। तत्

र १ १ र

पृथिवीमप्राहो२। थाया:२। तदस्तभ्नाउतोहो

१ १ १ १ २

२इ। दाइवा२म्। हा२ऊवाक्। ३। होवा। २।

२ २ २र १र र २१ र १र १

होवा३। हाउवा। ए। तेजोघर्म:सङ्क्रीडन्तेग्नि

२र र १ र २र१र २र १ २१ २र　१ १ १ १ १
शुमतीर्न्द्यायुगोपास्तजस्तीमंहृन्हिभुवनानिचक्रदू २ ३ ४ ५:
॥ २५ * ॥ १६

नृमेध-पुरुमेधौ ह्यष्टपी ऐन्द्रा अनुष्टुभः ॥

हे "अपूर्व्य" त्वत्तोव्यतिरिक्तेन पूर्वेण वर्जित ! † । हे "मघवन्" मंहनीयतम धनवन्निन्द्र ! "वृत्रहत्याय" ‡ वृत्रासुरहननाय "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोसि "तत्" तदानीमेव "पृथिवीं" प्रथमानाम् "अप्रथयः" प्रसिद्धां दृढाम् अकरोः । "उत" अपि च "दिवं" द्यां द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धां मकार्षीः ॥ ईदृशं वीर्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् अपूर्व्येति पदम् ॥ ७ ॥ १६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये-सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

* ऋ० सं० ८प०७,७,८—२५ ।

† 'अपूर्व्या पूर्वं मघवा वादिकाम्य् विद्यमाना'—इति ४प० २,७, अर्थवित् सायणः । 'यतः पूर्वं नास्ति सा अपूर्वा, अपूर्वा एव अपूर्व्या, स्वार्थिकस्तद्धितः, प्रथमेत्यर्थः'—इति च तत्रैव वि० ।

‡ 'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्'—इति नैरुक्तम् ७का० ३प० १०ख० । 'वृत्रवधो मेघवधः'—इति च तत्रत्य-भाष्यम् । "तत्को वृत्रो मेघ इति नैरुक्ताः । त्वाष्ट्रोऽसुर इत्यैतिहासिकाः । अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति"—इति निरु० नै०२,१६ ।

अथ तृतीय-खण्डे —

सैषा प्रथमा ।

१ २ १ २ १ ० १ २र १ २ ३ १ २र
मयिवर्चोअथोयशोथोयज्ञस्ययत्पयः ।
२ २ १ १ २ ३ १ २र
परमेष्ठीप्रजापतिर्दिविद्यामिवदृंहतु ॥ १ ॥ १७ *

२र १ १ १
† हाउ । ३ । आनो२ब्र्, वाङ् । २ । आनो२ब्र्
१ ३ ५र र १ २र र ३र ३ १ १ १ १
वा । २ । या२३४औहोवा । रक्षतनोरक्षितारा२३४५ः ।
२र १ २र र १ २र र
हाउ । ३ । आनो२ब्र् (पूर्वपाठः) गोपायतगोपायि
र ३ १ १ १ १ २र १ १ २ १ २
तारा२३४५ः । हाउ । ३ । आनो२ब्र्० । मयिवर्चः ।
१ २ १ २र १ १ १ २
अथोया१शा२ः । अथोयज्ञ । स्ययात्पा१या२ः । पर
र १र १ २ २ १ र १ २
मेष्ठी । प्रजापा१ती२ः । दिविद्यामि । वदृंहा१तू२
२र १ १ २र र १ १
३ । हाउ । ३ । आनो२ब्र्० । रक्षतनोरक्षितारा२
१ १ १ २र १ २र र १ २र र
३४५ः । हाउ । ३ । आनो२ब्र्० । गोपायतगोपायि

* ऋ० ८,७,१७,७ । † "प्राजापत्यस्य व्रतम्" — इति आ०ब्रा०१,२,२० ।

अथ द्वितीया ।

२ ३ २   ३ १ २ ३ २ ३
मन्ते पयांसि समुयन्तु वाजाः
१र  २र    ३ १ २
संवृष्ण्यान्यभिमातिषाहः।

२ ३ १ १ १ १ १  ३र  १  २र  १
तारा२३४५ः। हाउ। ३। आनो२प्र,०। ए। रन्त
२र  र र र र १ २र र र  ० २र  १
ननोरक्षितारोगोपायतंगोपायितारः। २। ए। रन्त
२र  र र र र र २र र  र ३ १ १ १
ननोरक्षितारोगोपायतगोपायितारा२३४५ः॥ ७ * ॥ १७

वामदेवऋषिः प्रोक्तो मयीत्यस्याः प्रजापतिः।

देवता स्यात्ततश्छन्दोऽनुष्टुप् मध्यदितोरितम्॥

"परमेष्ठी" परमे लोके तिष्ठतीति परमेष्ठी "प्रजापतिः" † "दिवि" द्योतमाने स्वर्गे "द्यामिव" द्योतमानां कान्ति मिव। "मयि" अस्मदीये शरीरे "वर्चः" तेजः ब्रह्माख्यं "दृंहतु" वर्द्धयतु। "अथो" अपिच "यशश्च" दृंहतु। "अथो" किञ्च "यज्ञस्य" यागस्य सम्बन्धि अतएव सं उत्तमं "पयः" हविर्लक्षण मन्नं च दृंहतु॥ १॥ १७

---

* आ० गा० ४प० ३, १, ७।

† 'प्रजापति प्रजानां पाता पालयिता वा'—इत्यादि नैरुक्तम् १का० १०ख० ४२, ४१ ख०।

१ २ २ ३ १ २
आप्यायमानोअमृतायसोम
३ १र २र ३ १ २
दिविश्रवाᳬस्युत्तमानिधिष्व ॥ २ ॥ १८ *

१र २ १र २ १ १ २
† ओवा२ । ३ । सन्तेपया । सो३समु । यन्तु
४र ५ १२ २ १ २र ३ ४र ५
वाजाः । संवृष्णिया । नो३अभि । मातिषाहाः ।
१र १र २ २ २र ३ ४र ५ २ १
आप्यायमा । नो३अमृ । तायसोमा । दिविश्रवा ।
२ १ २र ३ ४ ५ १र १
सो३उत्त । मानिधिष्वा । ओवा२ । २ । ओ२ ।
३ ५र र
वा२३४ । औहोवा । ३ ॥ ८ ‡ ॥

१ २ १र १ १ १ २ ४र ५
¶ ई२ । ३ । सन्तेपया । सो३समु । यन्तुवाजाः ।
२ १र २ १ १ २ ४र ५ २र १र
संवृष्णिया । नो३अभि । मातिषाहाः । आप्यायमा ।
२ १ १र २ ४र ५ २ १र २ १ १र २ ४
नो३अमृ । तायसोमा । दिविश्रवा । सो३उत्तमानिधि
५ १ १ २ ४र २ १
ष्वा । ई२ । २ । ई२आ२३४औहोवा । स्वः ॥ ११ § ॥ १८

* ऋ० १, ६, २१, २ । † "सोमव्रतम्"—इति ग्रा० ग्रा० ३.२,१० ।
‡ ग्रा० गा० २प० ४, १, ८ ।
¶ "सोमव्रतम्"—इति ग्रा० ग्रा० ३, २. १४ ।
§ ग्रा० गा० २प० ५, १, ११ ।

अथ तृतीया ।

२ ३ १र ९र १ १ २ २ ३ १ २ ३ १
त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
१र २र ३ २१ १ २ ३ १ ९र ३ १र ९र
त्वमाततनोरुर्वा३न्तरिक्षन्त्वं ज्योतिषा वितमो ववर्थ ॥ ३॥१९

१र २ ३र १र
* हाउ । ३ । हौवा३ । ३ । हाइ । हौवा३ ।
२र ४ २ १११ ४ १
३ । हौवा३ । ३ । हो३वा३४५ । २ । हो३वा३४ ।
५र र १ र र २र र १ २र १ २ १र १
औहोवा । त्वमिमा ओषधीः सोम विश्वाः । त्वमपो अज

त्रिष्टुभः पावमान्यः स्यादृषिर्गोतमनामकः ।

हे "सोम !" "अभिमातिषाहः" अभिमातीनां शत्रूणां हन्तुः "ते" तव एवम्भूतं त्वां "पयांसि" अपणार्थानि चीराणि "संयन्तु" सङ्गच्छन्ताम् । तथा "वाजाः" हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम् । "वृष्ण्यानि" वीर्याणि च सङ्गच्छन्ताम् । हे "सोम !" त्वम् "अमृताय" आत्मनः अमृतत्वाय अमरत्वाय "आ" समन्तात् वर्द्धमानः सन् "दिवि" नभसि स्वर्गे "उत्तमानि" उन्नततमानि उत्कृष्टानि "श्रवांसि" अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि "धिष्व" धारयते । [ "क्रियाग्रहणं कर्त्तव्यमिति (पा० २, ३,१३) कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी ।]॥ २॥ १८

* "होमव्रतम्"—इति चा० ब्रा० २,१ २५ ।

† "चतुर्थ्यर्थे बहुलं छन्दसि"—इति पा० २, ३, ६२ ।

१ र १ र ३र १ १ १ र ३र १ र
नयस्त्वङ्गाः। त्वमातनोरुर्वन्तरिक्षं। त्वञ्ज्योतिषावितमो
१ ३र २ ३र १
ववर्थ। हाउ। ३। हौवा३। ३। हाइ। हौवा
२र ४ १ १ १ १ ४
३। ३। होवा३। ३। हो३वा३४५। २। हो३
१ ३र र २र १ २ १ २ १र २
वा३४। औहोवा। ए। जनद्दिवमन्तरिक्षम्पृथिवीवि
१ र २ १ र २र र १ १ १ १ १
श्वभोजसम्पुरुरूपाअजीजनः। इट्। इडा२३४५॥१०*॥१९

हे "सोम!" "त्वम्" "इमाः" भूम्यां वर्तमानाः "विश्वाः" सर्वाः "ओषधीः" "अजनयः" उत्पादितवानसि। तथा "त्वम्" "अपः" तासा मोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः। तथा त्वं "गाः". सर्वान् पशून्† उदपादयः। "उरु" विस्तीर्णम् "अन्तरिक्षं" "त्वम्" "आ तनोः" विस्तारितवानसि। तस्मिन्नन्तरिक्षे यत् "तमः" अस्मद्दृष्टि-निरोधकम् अन्धकारं तदपि "त्वं" "ज्योतिषा" आत्मीयेन प्रकाशेन "वि ववर्थ" विशिष्टं कृतवानसि। [ववर्थ वृञ् वरणे लिटस्थलि, "बभूथाततन्यजगृभ्मववर्थेति" (पा०७,२,६४) निपात्यते॥

"आतनोः"—"आततन्थ"—इति साम्न ऋचः पाठौ॥३॥१९

---

* आ॰ गा०३प० ४, १, १०।

† "अथापि पशुनामेह भवत्येतस्मादेव"—इति निरु॰ ने॰ २, ५।

अथ चतुर्थी ।

अग्निमीडेपुरोहितंयज्ञस्यदेवमृत्विजम

होतारꣳरत्नधातमम् ॥ ४ ॥ २० *

† मनोहाउ । वयोहाउ । वर्चोहाउ । अग्निम् ।
ईडारइ । पुरोहा२३४इताम । इहहाउ । इडाहा
उ । आयुर्हाउ । यज्ञ । स्यदा२इ । वमृत्वी२३४जाम् ।
स्वर्हाउ । ज्योतिर्हाउ । ऋतꣳहाउ । होता । रꣳ
रा२३ । त्नधा३ता५मा६५६म । ए३ । महा२३४५ः ॥ १३ ॥
‡ हाउ३वा । अग्निमीडेपुरोहितम् । देवेषुनिधिमाꣳ
अहम् । हाउ३वा । यज्ञस्यदेवमृत्विजम् । देवेषुनि
धिमाꣳअहम् । हाउ३वा । होतारꣳरत्नधातमम् । दे

* ऋ० १,१,१,१ ।　　† मनो व्रतानिमम् ( आ० ग्रा० ३,२,११ ) ।
‡ आ० ग्रा० ३प० ४, १, १३ ।　　* यमव्रतायम (आ०ग्रा० २,१,११) ।

१र २ १र २ १ ८ २ऽ १र १२१र २ १र
वेषुनिधिमाꣳअह्वम्। हाउ३वा। ए। देवेषुनिधिमाꣳ
२ १
अह्वम्। (एवं त्रिः)॥ १८ *॥ २०

अग्नि मीळे मधुच्छन्दा गायत्र्येषाग्नि-संस्तुतिः।

"अग्नि"-नामकं "देवम्" "ईडे" स्तौमि [ईड स्तुताविति (अदा० आ०) धातुः मन्त्रस्यास्य होता प्रयुज्यमानत्वात् अहं होता स्तौमीति लभ्यते] कीदृशम् अग्निम्? "यज्ञस्य पुरोहितं" यथा राज्ञः पुरोहितः तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? "होतारम्" ऋत्विजम् [देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथाच श्रूयते—"अग्निर्वै देवानां होतेति"। पुनरपि कीदृशम्? "रत्नधातमं" यागरूपाणां रत्नानाम् अतिशयेन धारयितारं पोषयितारं वा†। अथाग्नि-शब्दस्य यास्को बहुधा निर्वचनं दर्शयति—"अथातोनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामो अग्निः कस्मादग्रणी भवति, अयं यज्ञेषु प्रणीयतेऽङ्गं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीवि र्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायतइति शाकपूणिरितादक्ताद्दग्धाद्वानी तात्स खल्वेते रकार मादत्ते गकारमनक्ते र्वा दहते र्वा नीः परस्तस्यैषा भवति(७,४,१)"इति॥ ४॥ २०

* आ० गा० १प्र०४,१,१८।

† यास्कस्त्वमुमेवं व्याख्यातवान्—"अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञश्च। देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो

अथ पञ्चमी।

१ २　　३ १ ३　२ १ २
ते मन्वत प्रथमन्नामगोनां
२　３ १ २ ३ १ २　३ २
त्रिःसप्तपरमन्नामजानन्।
१　२　३ १ ३क २ र　२ २
ताजानतीरभ्यनूषतक्षा
३　१ २　३ १ २　३ २ ३　१ २
आविर्भुवन्नरुणीर्यशसागावः॥ ५ ॥ २१
२र　　२र ३ र　　१　र र
* हाउ। ३। गावोहाउ। ३। वृषभपत्नीर्हाउ। ३।

...भवतीति वा यो देवः सा देवता। होतारं ह्वातारं। जुहोतेर्होतेत्यौर्णवाभः। रत्नधातमम् रमणीयानां धनानां दातृतमम्'—इति ७, १५। "पुरोहितः पुर एनं दधति"—इति च यास्कः २, १२॥ अत्र ऋचि स्वरसन्निवेशविधानप्रकारन्निरूप-माह दीक्षितः—"तत्राग्निशब्दोऽव्युत्पत्तिपक्षे फिषोऽन्त्योदात्तः व्युत्पत्तौ तु नि-प्रत्यय-स्वरेण। अग्निम्। उदात्तादनुदात्तः अमिपूर्वत्वेकादेशस्य एकादेश उदात्तेनोदात्तः। ईळे। तिङ्ङतिङ इति निघातः। संहितायां तूदात्तादनुदात्तस्येकारः स्वरितः। स्वरितात् संहितायामिति ळे इत्यस्य प्रचयापरपर्याया एकश्रुतिः। पुरः शब्दोऽन्तोदात्तः पूर्वाधरा-वराणामित्यसि प्रत्ययस्वरात्। हित-शब्दोऽपि धाञो निष्ठायां दधातेर्हिरिति ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः। पुरोऽव्ययमिति गति-संज्ञायां कुगतीति समासे समासान्तो-दात्ते तत्पुरुषे तुल्यार्थेत्यव्यय-पूर्वपद-प्रकृतिस्वरेण गतिकारकोपपदात् कृदिति कृदु-त्तरपद-प्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वापवादेन प्राप्ते गतिरनन्तर इति पूर्वपद-प्रकृतिस्वरः। पुरः-शब्दोकारस्य संहितायां प्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतर इत्याद्यनुदात्तः। ऋत्विक् शब्दः कृदुत्तर-प्रकृतिस्वरेणान्तोदात्तः। होतृ-शब्दस्तृन्-प्रत्ययान्तो नित्स्वरेणाद्युदात्तः। रत्न-शब्दो नप्रत्ययस्याद्युदात्तः रत्नानि दधातीति रत्नधाः। समासस्वरेण कृदुत्तरपद-प्रकृतिस्वरेणान्तोदात्तः। तमपः पित्वादनुदा-त्तत्वे स्वरितप्रचयावित्यादि पर्यालोच्य सुगमम्"—इति दे।

* "अथा मते"—इति आ॰ ग्रा॰ ६, २, २१। तत्र पूर्वेषु।

१२ २ २ २ १ २ २ २ १ २
वैराजपत्नीर्हाउ। ३। विश्वरूपाहाउ। ३। अस्मासुरम
२ १२ २ १ १
ध्व९हाउ। ३। तेमन्वतप्रथमन्नामगो२नाम्। त्रिःसप्त
२ १२ २ २ १ २
परमन्नामजा२नान्। ताजानतीरभ्यनूषता२ष्वाः। आ
१ २ २ १ २२ २२ २ २
विर्भुवन्नरुणीर्यशसागा२वाः। हाउ। ३। गावोहाउ।
१ २ २ २२ २ २ १ २२
३। वृषभपत्नीर्हाउ। ३। वैराजपत्नीर्हाउ। ३। विश्वरूपा
२ २ २ २ २ २
हाउ। ३। अस्मासुरमध्व९हाउ। ३। अस्मासुरमध्वा३९
२ १ २२ १२२२ १ १२२२१ २२ १ २ २२
हाउ। वा। ए। गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपा
१२ १ २२ १२२२ १ १२२२१ १२
अस्मासुरमध्वम्। ३। ए। गावोवृषभपत्नीर्वैराजपत्नीर्वि
१२ २२ १२ २ २ १११
श्वरूपास्मासुरमध्वा२३४५म्॥ १७ *॥

१२ १२ २ १
† हाउ। ३। तेमन्वतप्रथमन्नामगो। नाम्। ३।
१२ १ २ १ २२
हाउ। ३। त्रिःसप्तपरमन्नामजा। नान्। ३। हाउ३।
१२२ २ २ १ २२
ताजानतीरभ्यनूषता। ष्वाः। ३। हाउ। ३।

* आ० गा० २प० ४, १, १७।

† "गवां व्रते"—इति आ० गा०३,१,१७। तत्र पूर्वम्।

२र १  र  र  १  १  १
आविर्भुवन्नरुणीर्यशसागा। वाः। ३। हाउ३। वा।

२र  १ २र  २र  १ २ १ १ १ १
ए। दुघाः। २। ए। दुघा२३४५ः॥ १८ * ॥ २१

त्रिष्टुभा वामदेवोऽस्तौदग्निं तेमन्वतेति च।

हे "अग्ने!" "ते" स्तोत्रं कुर्वाणा अङ्गिरसः "गोनां" † गवां वाचां ‡ सम्बन्धि नाम स्तुति-साधकं शब्दमात्रं "प्रथमं" पूर्वम्, "अमन्वत" अजानत पश्चात्तस्या वाचः सम्बन्धीनि "त्रिःसप्त" एकविंशतिसङ्ख्याकानि "परमं" परमाण्युत्कृष्टानि "नाम" नामानि स्तुति-साधकानि स्तोत्राणि [ जातावेकवचनम् ¶ ] छन्दांसि वा [ तानि च गायत्र्यादीनि जगत्यन्तानि सप्त §, अति-जगत्यादीनि अतिधृत्यन्तानि सप्त ||, कृतिप्रभृतीन्युत्कृतिपर्यन्तानि सप्त + ] 'जानन्' अजानन् अलंभत एवंविधच्छन्दोयुक्तैर्मन्त्रै रग्निमस्तुवन्नित्यर्थः। "ताः" वाचः "जानतीः" सर्वं जानत्यः "उषाः" [ व्युच्छन्ति गच्छन्त्युषसः कालं प्रापयन्ति ताः ] "अभ्यनू-

* आ० गा० १प० ५,२,१८।

† "गोः पादान्ते (७, १, ५७)"—इति पा०।

‡ "गौः"—इति वाङ्नामसु चतुर्थं नैघण्टुकम् (१,११)।

¶ "जात्याख्यायामेकवचनं बहुवचनमन्यतरस्याम्"—इति पा० १,२,५८।

§ गायत्री, २ उष्णिक्, ३ अनुष्टुप्, ४ बृहती, ५ पङ्क्तिः, ६ त्रिष्टुप्, ७ जगती।

|| अतिजगती, २ शक्वरी, ३ अतिशक्वरी, ४ अष्टिः, ५ अत्यष्टिः, ६ धृतिः, ७ अतिधृतिः।

+ कृतिः, २ प्रकृतिः, ३ आकृतिः, ४ विकृतिः, ५ संस्कृतिः, ६ अभिकृतिः, ७ उत्कृतिः।

अथ षष्ठी।

१ २ ३ १र २र ३ १
समन्यायन्त्युपयन्त्यन्याः
१ २ ३ १ २ ३ २क ३ १र
समानमूर्वं नद्यस्पृणन्ति।
३ १ २ ३ २ ३ १ २ ३ १ २
तमूशुचिंशुचयोदीदिवांसम
२ ३ १र २र ३ १ २ ३ १ २
मपान्नपातमुपयन्त्यपः॥ ६॥ २२ *

षत" अस्तुवन्। ततः सूर्यस्य "यशसा" तेजसा सह "अरुणीः" अरुणवर्णाः "गावः" † "आविर्भुवन्" प्रादुरभूवन्। यद्वा "ते" अङ्गिरसः "प्रथमं" पुरातनं "नाम" एहि सुरभि गुग्गुलु-गन्धिमीति धेनु-नामधेयम् "अमन्वत" उच्चारयामासुः। पश्चात् स्व-भूतानि पणिभिरपहृतानि त्रिःसप्त-रत्नान्यविन्दन्। तत उच्चारितं जानत्यो "गावः" "अभ्यनूषत" हुम्भारवलक्षणं शब्द-मकुर्वत। तदानीं उषाः प्रादुरभूदिति॥

"तेमन्वतप्रथमन्नामगोनान्त्रिःसप्तपरमन्नामजानन्। ता-ञ्जानतीरभ्यनूषतक्षाआविर्भुवन्नरुणीर्यशसागावः"—इति छन्दो-गाः। "तेमन्वतप्रथमन्नामगोनान्त्रिःसप्तपरमन्नामजानन्। ता-ञ्जानतीरभ्यनूषतक्षाआविर्भुवंन्धेनोस्त्रिःसप्तमातुःपरमाणिविन्दन्। तज्जानतीरभ्यनूषतव्राआविर्भुवदरुणीर्यशसागोः" — इति बह्वृ-चाः॥ ५॥ २१

* ऋ०८,७,१४,१।

† "अरुणो गाव उषसाम्"—इति निघ० १,१५,७।

२र १र २ ११ र २ २र१
* हाउ। ३। ऐरयत्। ३। अपःसमैरयत्। ३। भूत
र २ २ र र र २र र र
मैरयत्। ३। अपाङ्गर्भोग्निरिडा। पाङ्गर्भोग्निरिडा। २।
२ र र र १ र २ १ १
पृथिव्यागर्भोग्निरिडा। ३। समन्व्यायन्त्युपयन्तियार२३न्याः।
२ र १ र ११ २ १र र र २ १
समानमूर्वन्नद्यस्पृणा२३न्ती। तमुशुचिꣳशुचयोदीदिवा२
२ ११र र २१ २ २र
३ꣳसाम्। अपान्नपातमुपयन्तियार२३पाइः। हाउ। ३।
१र २ २ १ र र २र१र २ २र
ऐरयत्। ३। अपःसमैरयत्। ३। भूतमैरयत्। ३। अपा
र र २र र र २ र र र
ङ्गर्भोग्निरिडा। पाङ्गर्भोग्निरिडा। २। पृथिव्यागर्भोग्निरिडा
२ र र र २ २र २ १
।२। पृथिव्यागर्भोग्निरिडा ३। हाउवा। ए। अग्निःग्नि
२ १ २र २ १ २ १ १र १र २ १ २ १ २र
शुकः। ए। शुक्रःग्निशुकः। ए। तेजःशक्रस्यशक्रम्। ए।
१र २१र र १र २र १र२१२र१२र१ २र १ र २
तेजःसम्राःसमीचीः। ए। तेजउपोनजारः। ए। सुवर्ज्योती
११११
२३४५ः॥ २॥

२र १र २ १र१ १
हाउ। ३। ऐरयन्। ३। समैरयन्। ३। सम
२ १ र १ १ २ २र१र
स्वरन्। ३। समन्व्यायन्त्युपयन्तियार२३न्याः। समानमूर्व

* "अपां गर्भे द्वे"—इति ग्रा॰ गा॰ २,१,११।

२ १ २ १र र र २ १
न्नद्यस्पृणा२३न्तौ। तमूशुचिंशुचयोदीदिवा२३ ए

२ २१र र २ १ २ २र १र
साम्। अपान्नपातमुपयन्तिया२३पा३ः। हाउ। ई। ऐर

२ १ र२ १ २ १ २
यन्। ३। समैरयन्। ३। समस्वरन्। २। समस्वरा३न्।

२ २ १ १ १ १
हाउवा३। ई२३४५॥ ४ *॥ २२

इतीयं त्रिष्टुबाग्नेयी दृष्टा गृत्समदेन सा।

"अन्याः" वर्षाणाः "आपः" "संयन्ति" भूम्यां सङ्गच्छन्ति "अन्याश्च" "पूर्वं" तत्रावस्थिताः "उपयन्ति" उपगच्छन्ति। ताः सर्वा आपः "समानं" सह "नद्यः" नदीभूत्वा "उर्वं" समुद्र-मध्ये वर्तमानं वडवानलं "पृणन्ति" प्रीणयन्ति [पृण प्रीणने(प०) तौदादिकः] "तमु" तमेव "अपान्नपातम्" "शुचिं" निर्मलं "दीदिवांसं" दीप्यमानं [दीदिवेति छान्दसो दीप्तिकर्मा लिटः क्वसुः॥ वस्वेकाजाद्घसा मिति नियमादड्भावः। छन्दसीवेति वक्तव्य मिति वचनाद्दिवचनाभावः] एवम्भूतं "शुचयः" शुभ्राः "आपः" "उपयन्ति" समीपे गच्छन्ति॥

एष हि वैद्युताग्निरूपेण मेघे वर्तमानोऽस्मान् अजीजनदिति बुध्वा वडवानलरूपेण वर्तमानं तं पर्युपासत इत्यर्थः। यद्वा अन्या

* आ० गा० १प० ४, १, १-४।

एकधनाख्या * आपः संयन्ति। चात्वालोत्करयोर्मध्ये † वस-
तीवरीभिः सङ्गच्छन्ते। अन्या वसतीवर्याख्या आपश्च ‡ उपयन्ति
उपगच्छन्ति एकमत्यं प्राप्ता भवन्ति। एताश्च मिलित्वा यज्ञं
साधयन्त्यः तत्साध्य-वृष्टि-द्वारा नद्यो भूत्वा जवं पृणन्तीत्यादि
समानम्। एवं हि आपो वा अस्पर्धन्त वयं पूर्वं यज्ञं वक्ष्याम
इत्यादिको बह्वृच-ब्राह्मण-विनियोगश्चानुगृह्यते॥

"अपामपातमुपयन्त्यापः"—"परितस्थुरापः"—इति साम-
ऋचः पाठ-भेदः॥ ६॥ २२

---

* "सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधनाः। एकं घनं सोमरूपं यन्तीति"—इति वेददीपः (य० मा० शा० स० ५ अ० ७क०)।

† "उत्तरवेदिनिर्माणार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते"—इति वेददीपः (य० मा० शा० स० ५ अ० ७क०)। "स्फ्योत्खातां मृद मुत्करे त्यजेत्"—इति वेददीपः (य० मा० शा० स० १ अ० २५क०)।

‡ "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणम् स्यन्दमानानामनस्तमिते-ऽस्तमिते निनाह्याद् ईजानस्य नीजानोऽन्यस्यापि समीपावस्थितस्य पुरंजानस्योभया भाव उल्मुकं हिरण्यं वोपर्युपरि धारयन् हविष्मतीरिति"—इति का० सू० ८, ९, ७-१०। अग्नीषोमीयस्य पशोर्वपामार्जनपर्य्यन्ते कर्मणि कृते अनस्तमिते रवौ वहन्तीनामपामेकदेशाद् वसतीवरीसंज्ञानां सोमार्थानामपां ग्रहणं कार्यं हविष्मतीरिति (य० मा० शा० स० ६ अ० २३क०) मन्त्रेण। यदि रविरस्तङ्गतो यजमानश्च पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्यात्कलशाद् वसतीवरीग्रहणम् निखननीयो निनाह्यः। यदि च यजमानः पुरा न सोमयाजी तर्हि समीपस्थितस्य यज्वनः निनाह्यकाद् ग्रहणम् तस्य चान्यस्य च यज्वकर्तृकाभावे उल्कां कनकं वा वहन्तीनामपां समीपे धारयन् वहन्तीभ्यो वसतीवरीर्गृह्णीयादिति सूत्रार्थः॥

, अथ सप्तमी।

१र २र ३ १-२३ १र २र ३ १ २र
आप्रागाद्भद्रा युवतिरह्नः केतून् त्समीर्त्सति।
१२ ३ २ ३१२३ १ २ ३ १ २ ३१ २
अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री॥ ७॥ २३ *

१ १र २ र२ १र २ १ १
† हो२इ। ३। आप्रागाद्भद्रा युवतिः। हो२इ। ३।
१ २र १र र २ १ १ र२ १र २१र १र
अह्नः केतून् त्समीर्त्सति। हो२इ। ३। अभूद्भद्रा निवेशनी।
१ १ २१ २र१र२र १ १
हो२इ। ३। विश्वस्य जगतो रात्री। हो२इ। २। हो२।
२ २ २१११
वा३। हाउवा३। ई२३४५॥ ६ ‡॥ २३

अस्तौदनुष्टुभा रात्रिं वामदेव ऋचानया।

"भद्रा" सूर्यप्रकाशसन्तापं निवारयन्ती सुखकरी "युवतिः" तमसो मिश्रयित्री¶ "रात्रिः" "आ प्रागात्" आभिमुख्येन प्रगच्छति। "अह्नः" § चन्द्रमसः "केतून्" रश्मीन् "समीर्त्सति" सम्यक्सम्बन्धयितु

---

* ऋ०४,४,१०,१।

† "रात्रे वतरम्"—इति आ०ग्रा०२,१,२१।

‡ आ०गा०३प०४,२,६।

¶ युवतिरिति मिश्रणार्थ-यौते रूपम्; तथा चैवमर्थः प्रकृति-सम्बन्धः।

§ "अहर्नामान्युत्तराणि द्वादश। अहः कस्मादुपाहरन्त्यस्मिन् कर्माणि"—इत्यादि निरु० नै० १, १०।

अथाष्टमी।

१ २ ३ १ २ ३ २ ३ १ २ ३ २

प्रत्नस्य वृष्णो अरुषस्य नू महः

२ ३ १ २ ३ १ २ ३ १ २

प्र नो वचो विदथा जातवेदसे।

३ १ २ ३ १ २ ३ १ २ ३ २

वैश्वानराय मतिर्नव्यसे शुचिः

१ २ ३ १ २ ३ १ २

सोम इव पवते चारुरग्नये ॥ ८ ॥ २४ *

† हाउ। ३। ऊ२। २। ऊ२। वा३। हाउवा३।

हस् हस् हस् अर्चिः शोचिस्तपो हरः। प्रत्नस्य वृष्णो अरुषस्य नूमा

२३हाः। प्र नो वचो विदथा जातवेदा२३साइ। वैश्वानराय

मतिर्नव्यसे शू२३चीः। सोम इव पवते चारुरग्ना२३या३इ।

मिच्छति च। अतएव "भद्रा" कल्याणी रात्री "विश्वस्य" सर्वस्य "जगतः" "निवेशनी" निवेशकारिणी "अभूत्" भवति। अहनि स्व-स्व-व्यापारात् खिन्नान् सर्वप्राणिनः स्वाश्रयेषु स्वापयतीत्यर्थः॥ ७ ॥ २३

* ऋ० ४,८,११,१।

† "विष्णोर्व्रतम्"—इति आ०ग्रा०१,२,२१।

हाउ। ३। ऊ२। २। ऊ२। वा३। हाउवा३। ई२
३४५॥ ७ *॥

† हाउहाउहाउ। ओहा। २। ओहाइ। वयोहोइ।
३। पयोहोइचक्षुर्होइ। ३। श्रोत्रꣳहोइ। ३। आयुर्होइ।
३। तपोहोइ। ३। वर्चोहोइ। ३। तेजोहोइ। ३। सुव
र्होइ। ३। ज्योतिर्होइ। ३। पृक्षस्यवृष्णोअरुषस्यनूमा२३-
हाः। प्रनोवचोविदथाजातवेदा२३साइ। वैश्वानरायमति
र्नव्यसेशू२३चीः। सोमइवपवतेचारुरग्ना२३या३इ। हाउ
२हाउ। ओहा२। ओहाइ। वयोहोइ। ३। पयोहोइ।
३। चक्षुर्होइ। ३। श्रोत्रꣳहोइ। ३। आयुर्होइ। ३।
तपोहोइ। ३। वर्चोहोइ। ३। तेजोहोइ। ३। सुवर्हो
इ। ३। ज्योतिर्होइ। २। ज्योतिर्हा२। वा२३४औहो

* आ० गा०३प० ४, १, ७।
† "मद्यादित्यवनरवते है"—इति आ० गा० १,१,१८। तत्र पूर्वम्।

२र  २  १  २ १ र  २  २र  २ १ २र१र  २  १
वा। ए। अग्निःसमुद्रमात्यन्। ए।' अग्निमूर्द्धाभवद्दिवः।

२र  २र  १र २ १  २ र  १र र र २ १ १ १ १
ए। आयुर्द्धाअस्मभ्यंवर्चोधादेवेभ्या२३४५ः॥ २ * ॥ २४

वैश्वानरं जगत्यास्तौद्भरद्वाजो बार्हस्पत्यः।

"प्रक्षस्य" सम्पृक्तस्य व्याप्तस्य [ यद्वा पृक्षं हविर्लक्षण मन्नं † तद्वतः ] "वृष्णः" सेक्तुः "अरुषस्य" ‡ आरोचमानस्य "वैश्वानराय" ¶ "महः" पूजायुक्तं बलं तेजो वा "नु" क्षिप्रं स्तौमि। अत एव "नः" अस्मदीयं "वचः" वचनं "विदथे" यागे § "प्रयच्छति" स्तौतीत्यर्थः। "जातवेदसे" जातप्रज्ञाय जातधनाय ‖ वा तमुद्दिश्येत्यर्थः। उक्तमेव प्रकारान्तरेणादरादाह—"नव्यसे" नवतराय "वैश्वानराय" अग्नये "शुचिः" निर्मला स्तोतृणां

---

* आ० गा० ३प० ६, १, २।

† "पृक्षः"—इति अन्ननामसु पञ्चमं नैघण्टुकम् २, ७।

‡ "अरुषीरारोचमानाः"—इति निरु० दै० ६, ७।

¶ वैश्वानरः कस्माद् विश्वान् नरान् नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः। तस्यैषा भवति ० ० ० इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्य्येण राजा यः सर्वेषां भूतानामभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति। तत्को वैश्वानरः मध्यम इत्याचार्य्याः वर्षकर्मणा ह्येनं स्तौति"—इति निरु० दै० १, २१-२२।

§ "विदथः"—इति यज्ञनामसु पञ्चमं नैघण्टुकम् ३, १७। "विदथानि वेदनानि। विदथानि प्रचोदयन्नित्यपि निगमो भवति"—इति नि० नै० ६, ७।

‖ "जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जात-

शोधयित्री वा "चारुः" कल्याणी "मतिः" मननीया स्तुतिश्च "पवते" मत्सकाशात् प्रभवति स्वयमेव गच्छतीत्यर्थः। "सोमः इव" यथा सोमो दशापवित्रात् स्रवति तद्वदित्यर्थः * ॥

"प्रत्नस्य"- "पूत्नस्य"—इति "मह्नः"-"सहः"— इति, "प्रनोवोच"-"प्रनुवोचम्"—इति, "जातवेदसे"-"जातवेदसः— इति, "नव्यसे"—"नव्यसि"—इति च साम्न ऋचः पाठ-भेदः ॥ ८ ॥ २४

---

वेदसो जातवेदस्त्वमिति ब्राह्मणं तस्मात् सर्वानृतून् पशवोऽग्निमभि सर्पन्तीति च तस्यैषा भवति ॥ जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति-दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः। जातवेदस इति जातवेदसे वा जात-वेदसेऽर्थाय सुनवाम सोममिति प्रसवायाभिषवाय सोमं राजानममृतमरातीयतो यज्ञार्थमस्मान्निदहाति। निश्चयेन दहति भस्मीकरोति सोमोददित्यर्थः। स नः पर्षदति दुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकूलां तारयति दुरितात्यग्निरिति दुरितानि तारयति। तस्यैषा परा भवति॥ प्रनूनं जातवेदसमश्वं हिनोत वाजिनम्। इदं नो बर्हिरासदे। प्रहिणुत जातवेदसं कर्मभिः समश्नुवाम अपि वोपमार्थे स्यादश्वमिव जातवेदसमितीदं नो बर्हिरासीदत्विति तदेतदेक मेव जातवेदसं गायत्रं तृचं दशत-यीषु विद्यते। यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते स न मन्येतायमेवाग्नि रित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते। ततो नु मध्यमः। अभिप्रवन्तसमनेव योषा इति तत्पुरस्ताद्व्याख्यातमथासावादित्य उदुत्यञ्जातवेदसमिति तदुपरिष्टाद्व्याख्यास्यामो यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते ऽयमेव सोऽग्निर्जातवेदा निपात-मेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते"—इति निरु० दै० १. १९—२०।

* "दशापवित्रेण परिषच्यमान ते योनिरिति पवस्वादनमिति का० ९, ५, २५। दशापवित्रेण गृहीतं पयं परिषच्य पात्राद्विनिर्गतं सोमं मार्जयित्वा एष ते योनि-रिति मन्त्रेण पवस्व सादनं करोति। वीप्सा सर्वपवार्था इति सूत्रार्थः॥

अथ नवमी।

१ २ ३ १ २र ३ २
विश्वे देवा मम शृण्वन्तु यज्ञ-
३ १र २र ३ १र २र३ १ २
मुभे रोदसी अपां नपाच्च मन्म।
२ ३ १ २ ३ १ २
मा वो वचाꣳसि परिचक्ष्याणि
३ २उ ३ १ २
वोचꣳ सुम्नेष्विद्वो अन्तमा मदेम ॥ ९ ॥ २५

२र १ २ १ १
* हाउ। ३। आइही। ३। आइहीर। ३। आइ-
२ १ २१ १ २र२ ११
हिहा २इ। २। आइहिहाइ। विश्वे देवा मम शृण्वन्तुया
२ २१२र र र र २१० २ १रर
२३याम्। उभे रोदसी अपां नपाच्च मे २३न्मा। मा वो व
र र २१ २ २र १ २
चाꣳसि परिचक्ष्याणि वो २३ चा३म्। हाउ। ३। आइही
१ १ २ १ ११
। ३। आइहीर। ३। आइहिहा२इ। २। आइहिहाइ।
१र र र ३ १ २१११
सुम्नेष्विद्वो अन्तमा मदा२इ माउ वा३। ई२३४५॥ ८ † ॥ २५

---

* "विश्वेषां देवानां व्रतम्"—इति आ० ग्रा० ३, २, ११।

† आ० ग्रा० २प० ४, १, ८।

एषा त्रिष्टुप् वैश्वदेवी भरद्वाजेन वीक्षिता।

"विश्वे" सर्वे "देवाः" "मम" मदीयं "मन्म" मननीयं "यज्ञं" यजनीयं पूजां हवींषि वा "शृण्वन्तु" गृह्णन्त्वित्यर्थः। "अपान्नपात्" मध्यस्थानोऽग्निश्च* "उभे रोदसी" द्यावा-पृथिव्यौ अस्मदीयं स्तोत्रं शृण्वन्तु चित्ते अवधारयन्तु।

अथ प्रत्यक्ष-कृताः—हे "देवाः"! "वः" युष्माकं "परि-चक्ष्याणि" परिवर्जनीयानि यानि "वचांसि" स्तोत्राणि "मा

---

* "अपान्नपात् तनूनपात्रा व्याख्यातः"—इत्यादि निरु० दै० ४,१८—१९। "तनून-पादाग्नं भवति नपादित्यननन्तरायाः प्रजाया नामधेयम्"—इत्यादि निरु० दै० २, ५॥ "आपः—इत्यन्तरिक्षनामसु षष्ठं नैघण्टुकम् १,३। "नपात्"—इति अपत्यनामसु त्रयोदशं नैघण्टुकम् २, २। अग्नेर्मध्यस्थानत्वं जातत्वादिकञ्च यथा—"अपा मुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना मन्दाना इति वा गृणाना माध्यमिका देवगणा विश इव राजान मुपतस्थुर्ऋग्मिय मृग्मन्त मिति वार्चनीय मिति वा पूजनीय मिति वा अवहद् दूतो देवानां विवस्वत आदित्याद्विवस्वान्विवासनवान् प्रेरितवतः परागता-द्वाऽस्याग्नेर्वैश्वानरस्य मातरिश्वान माजहार आह। मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वाथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति॥ मूर्द्धाभुवोभवतिनक्तमग्निस्ततःसूर्य्योजायतेप्रातरुद्यन्। मायामूतुयज्ञियानामेताम-पोयत्तूर्णिश्चरतिप्रजानन्। मूर्द्धा मूर्त्त मस्मिन् धीयते मूर्द्धा यः सर्वेषां भूतानां भवति नक्त मग्निस्ततः सूर्य्यो जायते प्रातरुद्यन्नेव। प्रज्ञां त्वेतां मन्यन्ते यज्ञि-यानां देवानां यज्ञसम्पादिना मपो यत् कर्म चरति प्रजानन् सर्वाणि स्थानान्यनु-सञ्चरति त्वरमाणस्तस्योत्तरा भूयसे निर्वचनाय॥ स्तोमेनहिदिविदेवासोअग्निमजी-जनञ्छक्तिभीरोदसिप्राम्। तमूअकृण्वन्त्रेधाभुवेकंसओषधीःपचतिविश्वरूपाः। स्तोमेन यं हि दिवि देवा अग्नि मजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्यो रापूरणन्तमकुर्वं-स्त्रेधा भावाय पृथिव्या मन्तरिक्षे दिवीति शाकपूणिर्यदस्य दिवि तृतीयं तद-सावादित्यइति हि ब्राह्मणं तद्गृहीतस्य स्तौत्यथैनमेतयादित्यगतस्य स्तौति"—इति निरु० दै० १, २६—२८।

अथ दशमी ।

१ २ ३ १ २ ३ १र २र ३ २
यशोमाद्यावापृथिवीयशोमेन्द्रबृहस्पती ।

२ ३ १ २ ३ १ २ ३ १ २
यशोभगस्यविन्दतुयशोमाप्रतिमुच्यताम् ॥

३ २ २ ३ २ ३ १ २ ३ १ २
यशस्वा३ऽस्याः सꣳसदोहम्प्रवदितास्याम् ॥ १० ॥ २६

२ऽ १र २र १र २ २ १र २ऽ
* हाउ३वा । यशोमाद्यावापृथिवी । हाउ३वा ।

१र २र २र २ऽ २र २
यशोमिन्द्रबृहस्पती । हाउ३वा । यशोभगस्यविन्दतु ।

२ १र २र १ २ र २ऽ २
हाउ३वा । यशोमाप्रतिमुच्यताम् । हाउ३वा । यश

१ र २ १ २ऽ २ १ २ १र र
स्वियस्याःसꣳसदः । हाउ३वा । अहम्प्रवदितास्याम् ।

२ऽ १ २ १
हाउ३वा । अस्त्रमिष्टये३हम् ॥ १२ † ॥ २६

वोचं'' न ब्रवीमि अपितु समीचीनानीति । अतः, "वः" युष्माकम् "अन्तमाः" अन्तिकतमाः सन्तो वयं "सुम्नेषु" युष्माभिर्दत्तेषु सुखेष्वेव ‡ वर्त्तमानाः "मदेम" मोदेम ॥

"यज्ञम्"—"यज्ञियाः"—इति पाठौ ॥ ८ ॥ २५

* "यशः"—इति आ०ग्रा०३,७,०३ ।

† आ०गा०इप०४,२,१२ ।

‡ "सुम्नम्"—इति सुखनामसु पाठः नैघण्टु,क०३,६ ।

अथ एकादशी।

१२ ३ २ ३क २र ३ १ २ ३ १ २ ३१ २ ३१ २ ३ २
इन्द्रस्यनुवीर्य्याणिप्रवोचंयानिचकारप्रथमानिवज्री।

२३१ २ ३ १ ३ १ २ ३ २ ३१ २ ३ १ २
अहन्नहिमन्वपस्ततर्द प्रवक्षणाअभिनत्पर्वतानाम्॥११॥२७*

वामदेवो महापङ्क्त्या स्तौति लिङ्गोक्तदेवता।

"द्यावापृथिवी" द्यावापृथिव्योः "यशः" "मा" स्तोतारम् "आविन्दतु" लभतां प्राप्नोत्वित्यर्थः। किञ्च, "इन्द्रबृहस्पती" इन्द्राबृहस्पत्योः† "यशः" "मा" मां विन्दतु। किञ्च, "भगस्य" आदित्यस्य‡ "यशः, "मा" मां विन्दतु। बहुलेन यशसा यशोमया "मा प्रतिमुच्यताम्" न प्रमुच्यताम्। "यशस्त्वस्याः" अस्याः मम "संसदः" समूहस्य "यशः" न प्रमुच्यताम्। "अहं" प्रवदिता सर्वत्र प्रवक्ता "स्याम्" भूयासम्॥ १०॥ २६

---

* ऋ०१,२,२९,१।

† "लिङ्गैव देवता इत्युक्तं पुरस्तात्तासां भक्ति-साहचर्यं व्याख्यास्यामः।...। "अथैतान्यग्निभक्तीनि।...। अथास्य संस्तविका देवा अग्निः सोमो वरुणः पूषा बृहस्पतिः ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः। अथापि मित्रो वरुणेन संस्तूयते पूष्णा रुद्रेण च सोमोऽग्निना च पूषा वातेन च पर्जन्यः"—इति निरु० दै० १,१०।

‡ "भगो व्याख्यातः तस्य कालः प्रागुत्सर्पणात्"—इत्यादि निरु० दै० ६,१३—१४। "आर त्वा भगम्। आर इव भग आदित्योऽप आर उच्यते"—इत्यादि निरु० नै० ६,१६।

२ १ २ २ १२ १२१२
* वृत्रहत्यायचोइ। ३। मधृष्णवेचोइ। ३। अपूरवे

२२१ २ १२ २ २ १२
चोइ। २। अपूरावा२इ। पृथिवीम्बाचोइ। विवर्त्तयाचो

२ १ २ १ १२ १२
इ। २। विवर्त्तया२। अन्तरिक्षञ्चोइ। ३। सुधारया

२ २ १ २ १२ २ १२१२
चोइ। २। सुधाराया२। दिवंवेपाचोइ। ३। अवेपयी

२ २१ १ १ ऽ
चोइ। २। अवपाया२ः। चोइ। २। ऊवे२। चा

१ ऽ १ २१ २ १
३१उवा२। इन्द्र२। २। इन्द्र। स्यनू। २। स्यनू३। आ

१ १२ १२ २१ २ १
उ। वा२। वीर्य्याणि। प्रवा। २। प्रवा३१उ। वा२३।

२ ११११ १२ २ ऽ १२ २ १ २
चा२३४५म्। यानौ२। २। यानि। चका। २। चका३१

१ २ १२ २ १ २ १
उ। वा२। रप्रथमा। निवा। २। निवा३१उ। वा२३।

२ ११११ १ ऽ १ २१
औ२३४५। मद्द२न्। २। मद्दन्। मद्दाइम्। २।

२ १ १११ २१ २ १
अद्दा३१उ। वा२। अन्वपः। तता। २। तता३१उ। वा

२ ११११ १ ऽ १ २१ २
२३। दा२३४५। प्रव२। २। प्रव। सपा:। २। सपा३१

* "वार्च्छम्"—इति वा० ग्रा० १, २, ११।

१ २ १ १ १ १ २ १

उ। वा२। अभिनत्पा। वंता। २। वंता३१उ। वा२३।

१ १ १ १ १ १ १ २ १ २ १ १ २

ना२३४५म्। वृत्रहत्यायचोइ। ३। अधष्णावेचोइ। ३।

१ २ १ २ १ २ १ २ १ २ १ २

अपूरवेचोइ। २। अपूरावा२इ। पृथिवीम्बाचोइ। ३।

१ १ २ १ १ २ १

विवर्त्तयाचोइ। २। विवर्त्ताया२। अन्तरिक्ष९चोइ। ३।

१ २ १ २ १ २ १ २ १२ २

सुधारयाचोइ। २। सुधाराया२। दिवंबपाचोइ। ३।

१ २ १ २ १ २ १ १ १ ६

अवेपयोचोइ। २। अवेपाया२ः। चोइ। २। ऊवे१२।

१ १२ २ १२ १ १२

चाह१उवा२। ए। वृत्रचाभपत्नचा। ३॥ १७ *॥ २७

इष्टा हिरण्यस्तूपेन त्रिष्टुबेन्द्रदेवता।

"वज्री" वज्रयुक्त इन्द्रः "प्रथमानि" पूर्वसिद्धानि मुख्यानि वा "यानि" "वीर्याणि" पराक्रमयुक्तानि "कर्माणि" चकार। तस्य "इन्द्रस्य" तानि वीर्याणि। "नु" क्षिप्रं "प्रवोचं" प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—"अहिं" मेघम् † "अहन्" हतवान्। तदेकं वीर्यम्। "अनु" पश्चाद् "अपः" जलानि

* आ० ग्रा० १प० ४, १, १०।

† "अहिः"—इति नेघनामसु पठितं निघण्टुकम् १, १०।

अथ द्वादशी ।

२ ३१० ३१२ ३ १२

अग्निरस्मिजन्मनाजातवेदा

२ १ ३ १ २ ३ १ २ ३ १ २

घृतम्मेचक्षुरमृतम्मआसन् ।

३ १ २ ३ १२ ३२ ३ १२

त्रिधातुरर्कोरजसोविमानो

३२ ३ १ २ ३ १ २ ३ १ २

जस्रञ्ज्योतिर्हविरस्मिसर्वम् ॥ १२ ॥ २८ *

२ऽ २ १ २ १ २१२ १ २ १२ १ २

† हाउ३वा। अग्निरस्मिजन्मनाजातवेदाः। इडा।

१ १ २ २ऽ २ १ २१ ३१ २ ३१

सुवः। इडा। हाउ३वा। घृतम्मेचक्षुरमृतम्मआसन्।

१ २ १ १ २ २ऽ २ १२ २ १२ १२

इडा। सुवः। इडा। हाउ३वा। त्रिधातुरर्कोरजसो

"ततर्द" हिंसितवान् भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यम्। "पर्वतानां" सम्बन्धिनीः "वक्षणाः" प्रवहणशीला नदीः† "प्राभिनत्" कूलद्वय-कर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यम् ‡ ॥ ११ ॥ २७

---

* ऋ०२,२,११,१—३,१,२०,२—१,२,५,२ ।

† "अग्ने दिवो अर्णमच्छा जिगासि"—इति आ०ग्रा०४,२,२४ । अत्रैव द्वितीयमेतत् ।

† "वक्षणाः"—इति नदीनामसु नवमं वैदिकनिघण्टुकम् १, १३ ।

‡ "अपां यत् कर्म रजोऽपहरणं ... वा च च वा च ... वृत्र-वधीन सम्"—इति निरु० दै० १, १० । ... इति च तद्भाष्यम् ।

१र २ १ र १ १ र २३ १ २
विमानः। इडा। सुव.। इडा। हाउश्वा। अजस्र

१र ११ १ १ २ १ र १ १ र
ज्योतिर्हविरस्मिसर्व्वम्। इडा। सुवः। इडा॥ २ *॥ २८

विश्वामित्रऋषिस्त्रिष्टुप्छन्दस्त्वग्निरिति द्वयोः।

उत्तराग्नेः स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः।

हे कुशिकाः! भोक्तृ-भोग्य-भावेन द्विविधम् इदं सर्वं जगत्। "एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्न मग्नि रन्नादः"—इति श्रुतेः। तत्र सकल-भोक्तृ-वर्ग-रूपेणान्नादोऽग्निः। स च अग्निवाय्वादित्य-भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति। तदुक्तं वाजसनेयके—"स त्रेधात्मानं व्यकुरुतादित्यं द्वितीयं वायुं तृतीयम्"—इति।

तत्र सः "अग्निः" अहं "जन्मना" एव "जातवेदाः" "अस्मि" श्रवण-मननादि-साधन-नैरपेक्ष्येण स्वभावत एव साक्षात्कृत-पर-तत्त्वस्वरूपोऽस्मि। "घृतं मे चक्षुः" यदेतद्विश्वस्यावभासकं मम स्वभावभूतम्प्रकाशात्मकं चक्षुः तद् घृतम् इदानीं मत्यन्तं दीप्तम्। यदेतद् "अमृतं" कर्म-फलं दिव्यादि विविध-विषयोपभोगात्मकं तत् "मे" मम "आसन्" आस्ये वर्तते। सकल-भोक्तृ-वर्गात्मना स्वयमेवावस्थानात् †। एवं स्वात्मनः पृथिव्यधिष्ठातृ-रूपता मभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृता माह—अर्को जगतः स्रष्टा

* आ० गा० ३प० ५, १, २।

प्राणः। "सोर्चन्नचरत्तस्यार्चत आपो आयन्तार्चतैव मेक मभूदिति तदेवार्कस्यार्कत्वम्"—इति श्रुतेः । स प्राणः अहं "त्रिधातुः" त्रिधात्मानं विभज्य तत्र वायुात्मना "रजसः" अन्तरिक्षस्य "विमानः" विमाता अधिष्ठातास्मि ॥ तथा आदित्यरूपेण द्युलोकाधिष्ठातृता माह—"अजस्रं ज्योतिः" अनुपक्षीणं नित्यं तेजः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽप्यहमस्मि । एवं भोक्तृ-रूपता मात्मनोनुसन्धाय भोग्यरूपता मप्यनुसन्धत्ते । यत् "हविः" भोग्यं प्रसिद्धं मस्ति तत् "सर्वम्" अप्यह मेवास्मि* ।

यद्वा । अहम् "अग्नि रस्मि" देवानां हविः-प्रापणात् अङ्गनादिगुण-युक्तोऽस्मि । किञ्च, "जन्मना" उत्पत्त्या "जातवेदाः" जातज्ञानोऽस्मि । उत्पत्ति-क्षण एव सर्वज्ञोऽह मस्मि । अथवा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः । तत् कथम्? इत्युच्यते—"घृतं मे चक्षुः" यदेतद् घृतं प्रसिद्धमस्ति तन्मे चक्षुः-स्थानीयम, यथा लोके चक्षुर्भासकम् एवं घृतमपि प्रक्षिप्तं ज्वालामुत्पादयत मम भासकम्। "अमृतं" प्रभारूपं यदमृत मविनाशि ज्योतिः "मे" मम "आसन्" आस्ये वर्त्तते । "त्रिधातुः" प्राणापानव्यानात्मकस्त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यह मेवास्मि । तथा "रजसः" अन्तरिक्षस्य "विमानः" विशेषेण माता परिच्छेत्ता वायुश्चाह मस्मि । किञ्च । "अजस्रं ज्योतिः" नैरन्तर्येण तापकः सूर्यश्चाह मस्मि । किं बहुना । आज्य-पुरोडाशादिरूपं यदेतद्धवि रस्ति तदुपलक्षितं तत्सर्वं मप्यह मस्मि । "सर्वं खल्विदं ब्रह्म"—इति

* अत्र षष्ठोर्कापलब्धं तत्-पुरस्तादेवावस्थितमपरमन्त्रस्यान्त्यम ठीकितम् ।

अथ त्रयोदशी ।

२ ३ १ ३ १र ३र ३ २र
पात्यग्निर्विपो अग्रम्पदं वेः
३र ३ १र २र ३ १ २
पातियह्वश्चरणꣳसूर्य्यस्य ।
२ ३ १ २ ३ १ २ ३ १र
पातिनाभा सप्तशीर्षाणमग्निः
२र ३ १ २ ३ १ २ ३ २
पातिदेवानामुपमादमृष्वः ॥ १३ ॥ २९ *

॥ तृतीय-दशति ॥

१र २र र १ १र १
† हाउ । ३ । पात्यग्निर्विपोअग्रम्पदंवेः । हा३१उवा
२ ५ २ २ १
२३ । सूर२३४वाः । इह । हा३१उवार२३ । ज्योर२३४
५ १र २र र १ १र २
तीः । हाउ । ३ । पातियह्वश्चरणꣳहरियास्या । हा३
१ ५ २ २ १
१उवा२३ । सूर२३४वाः । इह । हा३१उवार२३ । ज्योर

श्रुतेः । तमनेकधाम्नेः सर्वात्मकत्व-प्रतिपादनेन परब्रह्मत्व मुक्तं भवति ॥

"अजस्र"-"घर्मः"—इति साम्न ऋचः पाठ-भेदः ॥ १२ ॥ १८

---

* ऋ० ३,१,९,१—३,१,२५,२—३,१,२१,१ ।

† इदमपि तत्रैव ज्ञातं द्रष्टव्यम् ।

५ २र २र २ र २ र १ २ १
३४ती। हाउ। २। पातिनाभासप्तशीर्षाणमाग्निः। हा

१ ५ २ १ १
३१उवा२३। सू२३४वाः। इह। हा३१उवा २३ ज्यो२३४

५ २र २र २ र २ र १ २ १
ती। हाउ। ३। पातिदेवानामुपमादमृष्वः। हा३१

१ ५ २ १ १
उवा२३। सू२३४वाः। इह। हा३१उवा२३। ज्यो२३

५
४ती॥ ३ *॥ २९

"अग्निः" "वेः" गन्ताः † सर्वत्र व्याप्ताः "विपः" रिपः भूम्याः ‡ "अग्र" मुख्यं "पदं" "स्थानं" "पाति" रक्षति। "यह्वः" महान्¶ अग्निः "सूर्यस्य" "चरणं" चरत्यनेनेति चरणमन्तरिक्षं§ "पाति"। "नाभा"‖ नाभौ अन्तरिक्षस्य मध्ये "सप्तशीर्षाणं" सप्तगणं मरुद्गणं "पाति"। "ऋष्वः" दर्शनीयोऽयम् +

* आ० ग्रा० १प० ५, १, १।

† "वेः—इति वेतेर्गतिकर्मणो रूपम्, नै० २, १४, १८।

‡ "विपः"—इति रिप इत्यस्य रेफलत्वये, वकारभावे रूपम्, "रिपः"—इति तु पृथिवी-नामसु पठितं नैघण्टुकम् १, १।

¶ "यह्वः"—इति महन्नामसु पठितं नैघण्टुकम् ३, ३।

§ "चरणमन्तरिक्षनामसु "अध्वा"—इति (नै० १, ३, १२)।

‖ सुपां सुलुगित्याकारे रूपम् (पा० ७, १, ३९)।

+ "ऋष्वः"—इति महन्नामसु पठितमिदम् निरु० १,१०—१०,१६—१२,१०—१४,११।

अथ चतुर्थखण्डे—

सैषा प्रथमा।

१ २ २ १ २ ३ २ ३ १ १
आजन्त्यग्निसमिधानदीदिवोजिह्वाचरत्यन्तरासनि।
१र २र ३ १ २ ३ २ ३१र २र ३ १ २
सत्वन्नोअग्नेपयसावसुविद्रयिंवर्चोदृशेदाः॥ १॥ ३०

* आजाऔहोहोहाइ। त्यग्नेसमिधानादी१दिवा२ः।
जिह्वाऔहोहोहाइ। चरत्यन्तारा१सानी२। सत्वाऔ
होहोहाइ। नोअग्नेपयसावसू३वीत्। रयिंवर्चोदृशौहो
३। ऊम्मा२। हा। औ३होवा। हो५इ। डा॥ ५ †॥ ३०

"अग्निः" "उपमादम्" "देवानाम्" उपमादकं यज्ञं "पाति" रक्षति॥

"पात्यग्निर्विपोअग्रम्" — "पातिप्रियेरिपोअग्रम्" -- इति पाठौ॥ १३॥ २९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठस्याध्यायस्य तृतीयः खण्डः॥ ३॥

* तत्रैव पञ्चम मिदम्।

† आ० गा० १ प्र० ५, १, ५।

अथ द्वितीया।

१  १२   १२ १ १२   १२
वसन्तइन्नुरन्त्योग्रीष्मइन्नु रन्त्यः।

२ १२  २२११२  ३१२  १२३ १२  १२
वर्षाण्यनुशरदोहेमन्तःशिशिरइन्नुरन्त्यः॥ २॥ ३१

२     ४ २ ४  ५   १२   २
* वा५सन्तः। ई३न्नू३रन्तायाः। ग्रीष्मइन्नुरा१

१ २  २१२  २  १  २ १  १२
नो३याः। वर्षाण्यनुशा३। ऊम्। रा३दाः। हेमन्तः

२ १  २१११
शिशिरइन्नुरा३न्तियाउ। वा३४५॥ ८†॥ ३१

वामदेव ऋषिः पङ्क्तिर्भ्राजन्त्यग्न इति द्वयोः।

आग्नेयी प्रथमर्त्व्या द्वितीया दृश्यते तयोः॥

“समिधान” ऋत्विग्भिः समिध्यमान! दीप्त! हे “अग्ने!” “भ्राजन्तो” प्रकाशमाना “आसनि” आस्ये “अन्तर्” मध्ये स्थिता त्वदीया “जिह्वाः” ‡ हवींषि “चरति” भक्षयति। हे “अग्ने”! “वसुवित्”! धनलम्भक! त्वम् “अस्मभ्यम्” “पयसा” अन्नेन सह “रयिं” रमणीयं धनं “दृशे” दर्शनाय “वर्चः” तेजश्च तेजस्वित्वं वा “अदाः” देहि॥ १॥ ३०

* “ऋतुथा”—इति आ० ग्रा० २, २, १४।

† आ० ग्रा० १प० ५, १, ९।

‡ “जिह्वा”—इति आद्यामद्य च दृश्यते १,११। अग्नेश्च जिह्वाः सप्त काली-कराळीत्येवमादयः प्रसिद्धाः, ता एव पुनः सूत्रार्थत्वेनोक्ता इत्यर्थः।

"वसन्तः इन्नु" वसन्त एव चैत्र-वैशाखरूपो वसन्तऋतुरेव "रन्त्यः" रमणीयः भवति। "ग्रीष्म इन्नु" ज्येष्ठाषाढरूपो ग्रीष्म-ऋतुरेव "रन्त्यः" रमणीयः। "वर्षाणि" वर्षा श्रावण-भाद्रपद-रूपेणावयवीभूतः प्रावृट् ऋतुरेव "रन्त्यः" रमणीयः। "तान्यनु" "शरदः" आश्विन-कार्त्तिकरूपेणावयवीभूत ऋतुः "रन्त्यः" रमणीयः। "हेमन्तः" मार्गशीर्ष-पौषरूप एव "रन्त्यः" रमणीयः। "शिशिर इन्नु" माघ फाल्गुनरूप एव "रन्त्यः" रमणीयः * ॥ २ ॥ ३१

---

* अत्रोपनिषत् तद्व्याख्यानञ्च यास्ककृतम्—"सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा। त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः। सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम् चक्रं चकतेर्वा चरतेर्वा क्रामतेर्वा एको अश्वो वहति सप्तनामादित्यः सप्तास्मै रश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयः स्तुवन्तीति वा इदमपीतरन्नामैतस्मादेवाभिसन्नामात्। संवत्सरप्रधान उत्तरोऽर्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति। संवत्सरः संवसन्तेऽस्मिन् भूतानि। ग्रीष्मो ग्रस्यन्तेऽस्मिन् रसा वर्षा वर्षत्यासु पर्जन्यो हेमन्तो हिमवान्। हिमं पुनर्हन्तेर्वा हिनोतेर्वा अजरमजरणधर्माणमनर्वमप्रत्यृतमन्यस्मिन्। यत्रेमानि सर्वाणि भूतान्यभिसन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभिः स्तौति। पञ्चारे चक्रे परिवर्तमान इति पञ्चर्तुतया। पञ्चर्तवः संवत्सरस्येति च ब्राह्मणं हेमन्त-शिशिरयोः समासेन षडर आहुरर्पितमिति षडृतुतया। अराः प्रत्यृता नाभौ। षट् पुनः सहतेः। द्वादशारं नहि तज्जराय। द्वादशप्रधिश्चक्रमेकमिति मासानां मासा मानात्। प्रधिः प्रहितो भवति। तस्मिन् साकं त्रिशता न शङ्कवोऽर्पिताः षष्टिर्न चलाचलासः। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन। सप्त शतानि विंशतिश्च तस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन"—इति निरु० नै० ४, २०।

अथ तृतीया।

१ १ २ १ १ २ ३ २ ३ १ २
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्।
१२ ३२ ३१ २ ३ ० २ ३ १
सभूमिꣳसर्वतो*वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३ ॥ ३२ †

२ १ २ २ १ २ २ १ २
‡ उऊवाद्दाउ। ३। सहस्रशीर्षाःपुरू२३षाः। सह-
२ १ २ १ २ १२ ३ १२ २ १
स्राक्षःसहस्रा२३पात्। सभूमिꣳसर्वतोवार२३त्वा। अत्यति
२१२ २ २ १ २ २ १ २
ष्ठद्दशाङ्गू२३लाम्। उऊवाद्दाउ। २। उऊवा३द्दाउ।
२ १ १११
वा३। हुट् हुडा २३४५॥ १२०¶॥ ३२

सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्ड-देहो विराडाख्यो यः पुरुषः सोऽयं "सहस्रशीर्षाः" सहस्र-शब्दस्योपलक्षणत्वात्‖ अनन्तैः शिरोभिर्युक्त इत्यर्थः। यानि सर्व-प्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति, सहस्र-शीर्ष-त्वम्। एवं सहस्राक्षत्वं सहस्रपादत्वं च। स पुरुषो "भूमिं"

* "विश्वतो"—इति ऋ०।	† ऋ० ८, ४, १७, १।
‡ "द्वे पुरुषव्रते"—इति आ० ग्रा० ३,२,२५।
¶ आ० गा० ३य० ५, १, ११।
‖ "सहस्रम्"—इति बहुनामसु दशम नैघण्टु कम १, १।

अथ चतुर्थी।

१ २ ३ १ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः।
२ ३ ३ २३क १२ ३ १२ ३ २
तथा* विष्वङ् व्यक्रामदशना † नशने अभि॥ ४॥ ३३ ‡

२ १ २ २ ३ १२ २ २ २
¶ उङ्कवौहोवा २। ३। त्रिपादूर्ध्वउदैत्पुरु२३षाः।
१२ २ २ २ ३ १ २ १२ २ १ २
पादोस्येहाभवत्पू२३नाः। तथाविष्वङ्वियक्रा२३मात्।
२ २ २ २ ३ १ २ २ २ १
अशनानशनेआ२३भी। उङ्कवौहोवा २। २। उङ्क
२ १ २ ५२ २ २ ५ ११
वौ। होर। वा२३४। औहोवा। ई२३४डा। उङ्क
२ २ २ १ २ १ २ ५२ २
वौहोवा २। २। उङ्कवौ। होर। वा२३४। औहो

ब्रह्माण्ड-गोलक-रूपां सर्वतः "आ" समन्तात् "ह्रत्वा" परिवेष्ट्य दशाङ्गुल-परिमितं देशम् "अत्यतिष्ठत्" अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थितइत्यर्थः॥ १॥ ३२

---

* "ततो"—इति क०। † "साशना"—इति च क०।
‡ ऋ० ८, ४, १७, ४। ¶ तस्य द्वितीयम्।

अथ पञ्चमी ।

१ २ १२७　　११११७ ११ १
पुरुषएवेद१४*सर्वयद्भूतंय्यच्चभाव्यम् † ।

२　५　　११ र ७र　　　११ र
वा । वा२३४वाः । उद्भ्वौहोवा२ । २ । उद्भ्वौ ।

१　२　　५र र　　११११११
होर । वा२३४ । औहोवा । ऊ२३४५ ॥ १४ ‡ ॥ ३१

योऽयं "त्रिपात् पुरुषः" संसार-स्पर्श-रहितः ब्रह्म-स्वरूपः सोऽयम् "ऊर्ध्व उदैत्" अस्मादज्ञान-कार्य्यात्संसाराद्बहिर्भूतः सन् तत्रत्यैर्गुणदोषै रस्पृष्टः उत्कर्षेण स्थितवान् । "अस्य" योऽयं "पादः" लेशः सोऽयमिह मायायां प्रादुरभवत् । सृष्टि-संहाराभ्यां पुनः पुनरागच्छदिति [ अस्य सर्वस्य जगतः परमात्म-लेशत्वं भगवताप्युक्तम्—"विष्टभ्याहमिदं कृत्स्न मेकांशेन स्थितो जगदिति" ] तथा मायाया मागत्यानन्तरं "विष्वङ्" देव-तिर्य्यगादि-रूपेण विविधः सन् "व्यक्रामत्" व्याप्तवान् । किं कृत्वा ? "अशनानशने" अभिलक्ष्य अशनं भोजनादि-व्यवहारोपेतं चेतनं प्राणि-जातम्, अनशनं तद्रहित मचेतनं गिरि-नद्यादिकम् । तदुभयथा यथा स्यात्तथा । यथैव विविधो भूत्वा व्याप्तवानित्यर्थः ॥ ४ ॥ ३२

---

* "पुरुषवेदं"—इति
† "भवत्"—इति ।
} अन्येदीय-पाठौ ।

‡ छां० आ० ५प० ५, १, १४ ।

१२ १ १२३ १ २ ३१ २३ १२ ३ २
पादोस्यसर्वाभूतानित्रिपादस्यामृतन्दिवि * ॥ ५ ॥ ३४ †

२र १ २र १
‡ इयौहोवा२ । ३ । पुरुषएवेदꣳसार२३र्वाम् ।

१र ३१र २ २र २र २ २
यद्भूतंयच्चभावा२३याम् । पादोस्यसर्वाभुता२३नी । त्रि

१र २ २ १ २ १२र १र २
पादस्यामृतन्दा२३इवी । इयौहोवा२ । २ । इयौहो२

३ ५र २ ३ ५ १२र
वा२३४ । औहोवा । ई२३४डा । इयौहोवा२ । २ ।

१२ १ ३ ५र २ ३ ५ १र
इयौहो२ । वा२३४ । औहोवा । ज्यो२३४ती: । इयौ

२ १र १ ३ ५र २
होवा२ । २ । इयौ । हो२ । वा२३४औहोवा ।

१ १११
ई२३४५ ॥ १५ ¶ ॥ ३४

यत् "इदं" वर्त्तमानं जगत् तत् "सर्व" "पुरुषएव" । "य-भूतम्" उत्पन्नं जगत् "यच्च भाव्यं" भविष्यज्जगत् तदपि पुरुषएव यद्यस्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुष-

* "उतामृतत्व"—इत्यादिश्च मन्त्रशेषः ।

† ऋ० ८, ४, १७, ४ ।

‡ "त्रीणि लोकानां पदानि, दिवः"—इति ता० ब्रा० ३, १, १५ ।

¶ ता० आ० १प०५,१,१५ ।

अथ षष्ठी ।

१ २ ३ १उ ३ १ २३१२

तावानस्य*महिमाततो† ज्यायाꣳश्च पूरुषः ।

३१ २ ३ १ २र ३ १र २र ३ १ २

उतामृतत्वस्येशानो यदन्नेनातिरोहति‡ ॥ ६ ॥ ३५¶

२र १र र १ १ २ १र

§ हाउ । ३ । तावानस्य । महा२३इमा३ । हाउ

स्यावयवाः तथैव गतागामिनो ऽपि कल्पयोद्रष्टव्य मित्यभिप्रायः।

एतदेवोभयं स्पष्टीक्रियते—"अस्य" पुरुषस्य "सर्वाणि भूतानि"

काल-त्रय-वर्त्तीनि प्राणि-जातानि "पादः" चतुर्थोऽंशः । "अस्य"

पुरुषस्यावशिष्टं "त्रिपात्" स्वरूपम् "अमृतं" "विनाश-रहितं"

सत् "दिवि" द्योतनात्मके स्व-प्रकाश-स्वरूपे व्यवतिष्ठत इति

शेषः । [ यद्यपि "सत्यं ज्ञान मनन्तं ब्रह्म"-इत्यनन्तस्य परब्रह्म-

णोऽपीयदत्त्वाभावात् पादचतुष्टयं निरूपयितु मशक्यं, तथापि

जगदिदं ब्रह्म-स्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वो-

पचारः ॥ ५ ॥ ३४

---

* "इतावानस्य"—इति,

† "यतो"—इति, } ऋ० ।

‡ "पादोऽस्य"—इत्यादिश्च

¶ ऋ० ७, ४, १०, १ ।

§ "अन्तरिक्ष"—इति, वा० ब्रा० १,१,२५ । अंशमिश्रि श्वेवः ।

अथ सप्तमी।

१ १ १ १ २ ३ २ ३ २ ३ १ १
ततो*विराड† जायतविराजोअधिपूरुषः।
१ १ १२ १२ ३ १४ २ १ १ २ २
सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः॥ ७॥ ३६‡

१ २ २ २ १ १२ २ १२ २ १२
१। ततोज्याया२ंश्चपूरु२३षा३ः। हाउ। २। उता-
२ १ १२ १ २ २ १ १२
मृतत्वस्येशा२३ना३ः। हाउ। ३। यदन्नेनातिरोहा
१ २ऽ २ १ १ १ १ १
२३ती३। हाउ३। वा३। ईट् इडा२३४५॥ १६¶॥३५

अतीतानागतवर्त्तमान-रूप-जगदाद्याधारो योऽस्ति "तावान्" सर्व्वोऽपि "अस्य" पुरुषस्य "महिमा" स्वकीय-सामर्थ्य-विशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु "पुरुषः" "ततः" महिम्नोऽपि "ज्यायान्" अतिशयेनाधिकइत्यर्थः। "उत" अपिच "अमृतत्वस्य" देवत्वस्य "अयम् ईशानः" स्व-मायया "यत्" यस्मात् कारणात् "अन्नेन" प्राणिनां भोग्येन अन्नेन निमित्त-भूतेन "अतिरोहति" स्वकीयां कारणावस्था मतिक्रम्य परिदृश्यमान-जगदवस्थां प्राप्नोति। तस्मात् प्राणिनां कर्म फल-भोगाय जगदवस्था-स्वीकारात् नेदन्तस्य वस्तु-तत्त्व मित्यर्थः॥॥ ६॥ ३५

* "तस्माद्"—इति, } ऋ०।
† "विराल" इति च, }
‡ ऋ० ८,४,१७,५। ¶ आ० गा० १प० ५,१,१६।

२र १ र २ १र २र २र १ १र

* हाउ३वा। ततोविराडजायत*। हाउ३वा। विरा

२र र २ १र २ २ र १ २र १र २

जोअधिपूरुषः। हाउ३वा। सजातोअत्यरिच्यत।

र १ १र र २ १ र २ १ २ र १ २ १ १

हाउ३वा। पश्चाद्भूमिमथोपुरः। हाउ३वा३। ई२३

१ १

४५॥ १७॥ ३६

"विष्वङ् व्यक्रामत्"—इति यदुक्तं तदेवात्र प्रपञ्च्यते—"ततः" तस्मादादि-पुरुषात् "विराट्" ब्रह्माण्ड-देहः "अजायत" उत्पन्नः। [विविधानि राजन्ते वस्तून्यत्रेति विराट् ‡] "विराजो अधि" विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा "पुरुषः" तद्देहाभिमानी कश्चित् पुमानजायत। योऽयं सर्व-वेदान्त-वेद्यः परमात्मा सएव रूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवो ऽभवत् [एतच्चाथर्वणिकउत्तरतापनीये विस्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य मूढो मूढइव व्यवहरन्नास्ते माययैवेति]। "स जातः" विराट् पुरुषः "अत्यरिच्यत" अतिरिक्तोऽभूत्। विराड्व्यतिरिक्तो देव-तिर्यङ्मनुष्यादिरूपोऽभवत्। पश्चाद्देवादि जीव भावादूर्ध्वं भूमिं ससर्जेति शेषः। "अथो" भूमि-सृष्टेरनन्तरं तेषां जीवानां "पुरः" ससर्ज [पूर्य्यन्ते सप्तभि र्धातुभि रिति पुरः] शरीराणि ॥ ७॥ ३६

---

* "पृथिव्याः" इति ऋा० सं० ८,२,२१। मतमिति शेषः।

† ऋा० मा० ३प० ५, १, १७।

‡ "विराट् विरमणाद्विराजनाद्वा विराधनाद्वा"—इति दै० ब्रा० ३, १२।

मन्येवामिति पञ्चर्चा वामदेवेन वीक्षिताः।
अन्त्याद्यात्स्विमे च द्वे त्रिष्टुभस्तासु चादिमा ॥
उपरिष्टाज्ज्योतिरिति बहूचैव विधीयते।
अन्ये अनुष्टुभो द्यावा पृथिव्योः प्रथमा तथा ॥
द्वितीयैन्द्री चतुर्थी च तृतीयाग्नेर्निजात्मनः।
स्तुतिर्गवां मन्त्रिमेति छन्दोदेवत निर्णयः ॥

अथ अष्टमी।

१ २ ३ १ २ ३
मन्येवान्द्यावापृथिवीसुभोजसौ
१र २र ३ १ २ ३ १र २र
येअप्रथेथाममितमभियोजनम्।
१ २ ३ १ २ ३ १र २र ३ १ २
द्यावापृथिवीभवतꣳस्योनेतेनोमुञ्चतमꣳहसः॥ ८ ॥३७*

१ २र १ १ २ २ २ २ २
† उवाइ। ३। हुपम्। मन्येवान्द्यावापृथिवीसू३
१ २ २ २ २ १ २
भोजा१सा२उ। येअप्रथेथाममितमभी३योजा१ना२म्।

---

† "१ ग्रा० गा० ५, १८, २०, २१।

* "द्यावापृथिव्योः'—इति आ० आ० ९, २, २५।

१र र　र　१　१　१र र　१
द्यावापृथिवीभवा३ता॒स्यो१ना२इ। तेनोमुञ्चता३मा॒

२　१　१र　२　५र र
हा१सा२ः। उवाइ। ३। रूपा२। वा२३४औहोवा।

१र　र १
ए। रूपम्। ३॥ १८*॥

२　१र　१　१　१र　र　र र
† प्रतिष्ठासिप्रति। ष्ठा।३। वर्चोसिमनोसि। ऐही।

१ र र र र　र　र　र र र　१र　र र
मन्येवान्द्यावापृथिवीसुभोजसावैही। येअप्रथेथाममितम

र　र र र　१र र　र　र र　र र
भियोजनामैही। द्यावापृथिवीभवत॒स्योना। ऐही।

१र र　र र र　१　१र　२　१　१
तेनोमुञ्चतम॒ंहसाऐही। प्रतिष्ठासिप्रति। ष्ठा। ३। व

र　र　र　१　०१र　१र१
र्चोसिमनोसि। ऐही३। हाउवा। ए। भूतम्। ३।

॥ २१ ‡॥ ३७

हे "द्यावापृथिवी" द्यावापृथिव्यौ! "वां" युवां "सुभोजसौ" शोभन-पालयिताराविति "मन्ये" अहं जानामि हे द्यावापृथिव्यौ! "अमितम्" अपरिमितं "योजनं" [युज्यते पुरुषोऽनेनेति योजनम्] धनादि, तत् "अभ्यप्रथेथाम्" अभिविस्तारयतम्। हे

* आ० गा० १प० ५, १, १८।

† "विपरीते"—इति आ० गा० ३, २, २५। तत्र द्वितीयम्।

‡ आ० गा० १प० ५. १, २१।

अथ नवमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
हरीतइन्द्रश्मश्रूण्युतोतेहरितौहरी।
१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वास्तुवन्तिकवयःपुरुषासोवनर्गवः॥ ९॥ ३८

१ २ १ २ २ १ २ २ १ २ १ २ १ २
* हरीतइन्द्रश्मश्रूणी। उतोतेहरिता१उहा२री। तान्त्वा
२ ४ ५ २ १२ २ २ ४ ५
स्तुवन्तिका३। वायाः। पुरुषासोवना३। गावाः।
१ २ २ १ १ १ २ १ २ १ २
कण्यासइन्द्रभङ्क्तिमघवन्निन्द्रभुङ्क्तिभङ्तिप्रभुक्तिौ
२ २ १ १ १ १ १
न्द्रस्तसरपूता२३४५ः॥ २२.† ॥ ३८

"द्यावापृथिवी" द्यावापृथिव्यौ! युवां अस्माकं "स्योने" सुखरूपे‡ स्व-सुख कार्य्यै "भवतम्" "ते" द्यावापृथिव्यौ "वः" अस्मान् "अंहसः" पापात् "मुञ्चतम्" मोचयतम्॥ ८॥ ३७

हे "इन्द्र!" "ते" तव "श्मश्रूणि" "हरी" सोम-पानेन हरितवर्णानि [तथाच श्रूयते—"इन्द्रः श्मश्रूणि हरिताभि पुष्णुते"-इति। "शेश्छन्दसि बहुलम् (६,१,८०)"—इति हरि-

* "कण्वस्य साम व्रतं वा"—इति आ० ग्रा०१, २, २५।

† आ० गा० २प० ५, १, २२।

‡ "स्योनम्"—इति सुखनामसु पञ्चदशं नैघण्टुकम् ३,६।

अथ दशमी।

२उ ३ १२ ३ १ २ ३ १ २ ३ १ २ ३ २
यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत।
३१२ ३१२ ३ २ ३१ २ ३ १ २
सत्यस्य ब्रह्मणो वर्चस्तेन मा स९ सृजामसि॥ १०॥ ३९

१र २ १ २ १ २र१र १
* हाउ। ३। ऊ ऽ३मन्नम् ।३। अश्वमन्नादो। ह्यम
२र१र २र १र २र १ १र
न्नादो। २। हंविधारयो।२। हंविधारयः। हाउ।
१ २र १ २ १ १ र१ २र१र २ १ २
३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामू। ता। स
१ २ २र १ १ १र २र१ २र १ २र
त्यस्य ब्रह्मणोव। चाः। तेनमास९सृजाम। साइ। हाउ

शब्दात्परस्य शेर्लुक]। "उतो" अपिच। "ते" "हरी" अश्वौ† "हरितो" हरिद्वर्णौ। "कवयः" मेधाविनः "पुरुषासः"‡ पुरुषाः "वनगवः" [ वननीयाः सम्भजनीयाः सेवनीयाः गावो येषां ते वनगवः मध्यरेफश्छान्दसः ¶। गोस्त्रियो (१,२, ४८) रिति ह्रस्वत्वम् ] तादृशाः "कवयः" "तं" "त्वा" त्वां स्तुवन्ति॥ ॥ ८॥ ३८

* "द्विशं व्रतं दशानुगानम्"—इति ब्रा० ब्रा० ३, २, २१।

† "हरी इन्द्रस्य"—इति निघ० १,१५,१।

‡ "आज्जसेरसुक्"—इति पा० ७, १,५०।

¶ "वर्णागमो वर्णविपर्ययश्च"—इति पा० ६, ३, १०९ वा०।

१ १ २ १ २र १र १ २र १र
३। अन्नमन्नम्। ३। अन्नमन्नादो। न्नमन्नादो। २।
१ २र १र १ २र १ २१ २ २र
न्वंविधारयो। २। न्वंविधारयः। हाउ३। वा। ए।
२ १ १ १ २र १र १ २र १ १ र१
अन्नमन्नमन्नमन्नादोन्वंविधारयः। ३। ए। अहउस्तुव
र ३ १ १ १ १
ज्योतीर२३४५ः॥ १ *॥

१र २ १ २र १ २र १
हाउ। ३। अहउसहो। हउसहो। २। हउ
२र १ २ १ २र १ २ १ र १ र १र
सासहिः। अहउसासहिः। २। अहउसासहानो।
१ र १ र १र १ र १ र १, २र १ २र १
हउसासहानोहउसासहानः। हाउ। ३। यद्वर्चोहिर
२ १ १ र १ २र १ र २ १ १ १ १ १ २र १ १
एय। स्या। यद्वावर्चोगवाम्। ता। सत्यस्यब्रह्मणोव। चाः।
१र २र १ २र १ २र २ १ २र
तेनमासहउहजाम। साइ। हाउ। ३। अहउसहो।
१ २र १ २र १ २ १ २र १
हउसहा। २। हउसासहिः। अहउसासहिः। २।
२ १ र २ र १र १ र १ र १र १ र १ र १
अहउसासहानो। हउसासहानो। हउसासहानः।

---

* आ० ब्रा० ३प० ५, ६, १।

२ऽ १ २र १ १ १र १ १र १ २ १ र १ र
हाउ। ३। वा। ए। अह॑ऽमहोहऽसासहिरहऽसासहा

१ २र २ १ र १ १ १ १ १
नः। ३। ए। अहऽसुवर्ज्योती२३४५ः॥ २ *॥

२र १ १ २र १ २र १ २र
हाउ। ३। अहंवर्चा। हंवर्चा। हंवर्चः। हाउ।

१ २र १ २ १ १ २र १ २र १ र २ १ १ १
३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्। ता। सत्य

२ १ २र १ १ १र २र १ २र १ १र
स्यब्रह्मणोव। चाः। तेनंमासऽहजाम। साइ। हाउ।

१ १र १ २र १ १र १ १र
३। अहंवर्चा। हंवर्चा। हंवर्च। हाउ। ३। वा। ए।

० १ १र १ र १ १ १ १ १
अहंवर्चः। ३। ए। अहऽसुवर्ज्योती२३४५ः॥ ३ †॥

२र २ १ र २र १ र १र १ र
हाउ। ३। अहन्तेजो। हन्तेजो। हन्तेजः।

२र १ २र १ १ १ १ २र १ २र १ र १
हाउ। ३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्।

१ २ १ १ १ २र १ १ १र २र १ २र १
ता। सत्यस्यब्रह्मणोव। चाः। तेनमासऽहजाम। माइ।

२र २ १ र २र १ र २र १ र २र
हाउ। ३। अहन्तेजो। हन्तेजो। हन्तेजः। हाउ।

२ १ र २ १ . र १ १ १ १ १
ए। अहन्तेजः। ३। ए। अहऽसुवर्ज्योती२३४५ः॥ ४‡॥

*, †, ‡ आ० गा० २प० १, १, १-२-४।

२र १ १र १ १र १र
हाउ। ३। दिशन्दुहे। दिशन्दुहे। २। दिशो
१र १ र१र १र१र २र १ १र १
दुहे। ३। दिशोदुहे। ३। सर्वादुहे। ३। हाउ। यद्वचोहिर
१ १ १२र१२र१र२ १ २ १ १ १ २र१ १
एय। ह्या। यद्वावर्चोगवाम्। ता। सत्यस्यब्रह्मणोव। चाः।
१र २र१ २र १ १र १ १ र
तेनमासꣳसृजाम। साइ। हाउ। ३। दिशन्दुहे।
१ र१र १ र२र १र२र
३। दिशोदुहे। ३। दिशोदुहे। सर्वादुहो। ३।
२र २ २र १ १र१र २र १र२ र१२२ र
हाउ। वा। ए। दिशन्दुहेदिशोदुहेदिशोदुहेसर्वादुहे।
२र २ १ र ३ १ १ १ १ १
३। ए। अस्यꣳसुवर्ज्योतीर२३४५ः॥ ५* ॥

२र १र २ १ २
हाउ। ३। मनोजयित्। ३। हृदयमजयित्। ३।
१र १ ११ २र २र १ २र १
इन्द्रोजयित्। ३। अश्वमजैषम्। ३। हाउ। यद्वचोहिर
२ १ १ २र१२र१र२ १ २ १२१ २र १
एय। ह्या। यद्वावर्चोगवाम्। ता। सत्यस्यब्रह्मणोव।
१ १र २र१ २र १ २र १र२
चाः। तेनमासꣳसृजाम। साइ। हाउ। मनोजयित्।
१ २ १र २ ११ २र
३। हृदयमजित्। ३। इन्द्रोजयित्। ३। अश्वमजैषम्।

* आ० गा० १प० ५, २, ५।

३। हाउ३वा। ए। मनोजयिद्वृदथ्मजयिदिन्द्रोजयिदच्च
मजैषम्। ३। ए। अच्छुसुवर्ज्योती२३४५ः॥ ६॥

हाउ। ३। वयः। ३। वयोवयः। ३। हाउ। ३।
यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवाम्। ता। सत्यस्य
ब्रह्मणोव। चाः। तेनमासꣳसृजाम। साइ। हाउ।
३। वयः। ३। वयोवयः। ३। हाउ३। वा। ए। वयो
वयोवयः। ३। ए। अच्छुसुवर्ज्योती२३४५ः॥ ७॥

हाउ। ३। रूपम्। ३। रूपꣳरूपम्। ३। हाउ।
३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामृता। स
त्यस्यब्रह्मणोव। चाः। तेनमामꣳसृजामि। माइ।
हाउ। ३। रूपम्। रूपाꣳरूपम्। ३। रूपम्। ३। ए।
अच्छुसुवर्ज्योती२३४५ः॥ ८*॥

* आ० गा० ३प० ५. २, ७-७८।

१ १ १ २ १ २

हिहियजऊ२।॰३। उदपप्तम्। उदपप्तम्।२।

२र १र १ १ १ २र १ १

ऊर्ध्वानभाॅं्स्यक्षवि।३। व्यद्यौत्सम्।३। अततनम्।

२र २र २र १ १र १ २ १

३। हाउ। हाउ। हाउ। यद्वर्चोहिरण्य। स्या।

१ २र १ १र १ र १ १ २ १ २ १ १र १ १ १र

यद्वावर्चोगवामू। ता। सत्यस्यब्रह्मणो व। चाः। तेन

२र १ १र १ १ २ १ १

मासॅं्सृजाम। साइ। हिहियजऊ२।३। उदपप्तम्।

२र तर र १ १ २र १ २

३। ऊर्ध्वानभाॅं्स्यक्षवि।३। व्यद्यौत्सम्।३। अतत

२ऽ २ २र १ २ र १र र २ १

नम्।३। हाउ३वा। ए। उदपप्तमूर्ध्वानभाॅं्स्यक्षविव्य

२र १ २ २ १ २ १ १ १ १

द्यौत्समततनम्। ए३। पिन्वस्वा२३४५॥ ८ *॥

२र १र १ २र १र

हाउ। ३। प्रथे। ३। प्रत्यष्ठाम्। ३। हाउ। ३।

१ २र १ २ १ १ र १ २र १ र २ २ १

यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामूता। सत्य

२ १ २र १ १ १र २र १ २र १ २र

स्यब्रह्मणोव। चाः। तेनमासॅं्सृजाम। साइ। हाउ।

---

* आ० गा० २प० ५, २, ८।

अथ एकादशी ।

१ २ १ २ २ २ ३१
सद्यस्तन्नइन्द्रदध्योज

३क २ ३ १ २
ईंम्रेद्युस्यमद्दतोविरप्शिन् ।

१ २ १ ३२ २१ ३ २ ०२ १२
३। प्रथे । ३। प्रत्यश्ठाम् । ३। द्दाउ३ । वा । ए । प्रथेप्रत्य

३२ ०२ ३१ २ ० १११११
श्ठाम् । ए । अद्द२ सुवर्ज्योतीर२३४५ः ॥ १० * ॥ ३९

वामदेव ऋषिः । अनुष्टुप् छन्दः । आगामने विनियोज्या ।

"हिरण्यस्य" हित-रमणीयस्य एतन्नामकस्य "यद्दर्चः" तेजोऽस्ति । "यद्वा" अपिच । "गवाम्" एतन्नामकानां † "यद्दर्चः" तेजोऽस्ति । "उत" अपिच । "सत्यस्य" सर्वैः सम्मतस्य ‡ "ब्रह्मणः" यद्दर्चोऽस्ति तेन तैः "मा" "संसृजामसि"¶ सम्पादयामः । धनवन्तः पशुमन्तः श्रोत्रिया भवेमेति तात्पर्यार्थः ॥ १० ॥ ३९

---

* आ० गा० ३प० ५, २, १० ।

† "हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्साकर्मणः"—इति निरु० नै०२,१० ।

‡ गौरिति निघण्टौ पठ्यते (१,१,१—१,४,४—१,५,३—१,११,४—१,१५,७—२,११,१० ।

¶ "सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा"—इति निरु० नै०३,१३ ।

‖ "इदन्तोमसि"—इति पा०७,१,४६ ।

२ ३ १ ३ १ २     ३२ ३ १ २
क्रतुन्ननृम्णꣳस्थविरञ्चवाजं
३ २ ३ १ २  २ १ २
वृत्रेषुशत्रून्त्सहनाकृधीनः ॥ ११ ॥ ४०

२र    १ १    १ १    १
* हाउ। ३। आइही। ३। ओहा। २। आ
२   २र   १   १   १र
हा३। हाउ। ३। महस्तन्नइन्द्रदध्यो २जाः। आया
१५   २र १   १र र   र
२उ। ऊ। आयाउ। ३। ईशेह्यस्यमहतोविरा २
१   १र   १५   २र १   १
प्शायिन् †। आया २उ। ऊ। आयाउ। ३। क्रतुन्न
१   १र   १५   २र १
नृम्णꣳस्थविरञ्चवा २जाम्। आया २उ। ऊ। आया
२१र र र   १   १र
उ। ३। वृत्रेषुशत्रूंत्सहनाकृधा २इनाः। आया २
१५   २र १   २र   १
उ। ऊ। आयाउ। ३। हाउ। ३। आइही।
१ १   १ १   १ २   १५   २र
३। ओहा। ओहा। ओहा३। हाउ३। वा। ए
२र १र २ १   २ र १र र र   २ १ १ १ १
आयुर्द्दाअस्मभ्यंवर्च्चोधादेवेभ्या२३४५ः ॥ १७ ‡ ॥ ४०

---

* "कश्यपव्रतं दशानुगानम् * * * गवांव्रते"—इति आ० ब्रा० ३, २, २७ मत प्रथम मिदम्।

† "पश्यादन्"—इति क० पु० पाठः।

‡ आ० गा० ३प० ५, २, १७।

अथ द्वादशी।

२ १ २　३ १ २　३ १ २
सहर्षभाःसहवत्साउदेत

१ २ ३ २ ३ १ २
विश्वारूपाणिविभ्रतीर्द्व्यूध्नीः।

३ २ ३ २ ३ १ ०　३ २
उरुःपृथुरयंवोअस्तुलोक

३ १र　२र　३ २ ३ १ २
इमाआपस्सुप्रपाणाइहस्त ॥ १२ ॥ ४१

॥ चतुर्थ-दशति ॥

२　३ १　२र　१ २र　१र　२
* हाउ३वा। सहर्षभाःसहवत्स। उदेत। हाउ३

हे "विरप्शिन्" विशेषेण रपणं व्यक्त-वचनं तदस्यास्तीति विरप्शी, तस्य सम्बोधनं हे विरप्शिन्! विशेषेण स्तोत्र-विषये सत्यवाक्य? "इन्द्र!" "ते" तव "सहः" शत्रूणा मभिभवन-रूपम् "ओजः" बलं "नः" अस्मभ्यं "दद्धि" देहि [ददाते-श्छान्दसं रूपं लोड़ि हेर्धिभावादिना] यस्मात् त्वं तस्य "अस्य" "महतः" बलस्य "ईशे" ईश्वरो भवसि। अतो हे इन्द्र! "नः" अस्माकं "क्रतुं न" यज्ञमिव "नृम्णं" धनं "स्थविरम्" अतिशयेन प्रवृद्धं, "वाजं" बलं च "कृधि" कुरु। किञ्च नोऽस्माकं "शत्रून्" "हत्येषु" आवरकेषु उपायेषु "कृधि" कुरु ॥ ११ ॥ ४०

---

* "निक्रवाभिनिक्रवौ द्वा वमङ्कृते आ"—इति ना० आ० ७, २, २७। तत्र प्रथम मिदम्।

१ २ २र १र २ १ २र २ २ २३ १ १
वा। विश्वारूपाणिबिभ्रतीय्घ्नोः। हाउ३वा। उरुः-
१ १ २ १ २ २ २ १ २३ १ १ २ २ २
पृथुरयम्बोअस्तुलोकः। हाउ३वा। इम। आपःसुप्र-
२ १ २ २ १ २३ १ २ १
पाणाइहस्त। हाउ३वा। अस्वमिष्टये३इसुमा ॥१८*॥ ४१

हे "सहर्षभाः" वृषभैः सहिताः! "सहवत्साः" वत्सैः सहि-ताः! गावः! "दूघ्नीः" सायं प्रातः काले द्विविधान्यूधांसि यासां ता द्व्यूध्नीः द्व्यूध्न्यः! "विश्वा" सर्वाणि नाना "रूपाणि" "बिभ्रती" बिभ्रत्यः यूयम् "उदेत" उद्गच्छत समृद्धाः आगच्छत। किञ्च। "उरुः" बहुः "पृथुः" विस्तीर्णः [उरुः पृथु रिति शब्दा भ्याम् आयाम-विस्तारो उच्येते। "अयं लोकः" "वः" युष्मा-कम् "अस्तु" भवतु। "इमा आपः" "इह" लोके भूतले अस्मिंस्थाने "सुप्रपाणाः" सुखेन प्रकर्षेण पातुं योग्याः सन्तु तस्मादिह बद्धीभूताः "स्त" भवत उपविशतेति पूर्वेण सम्बन्धः ॥ १२ ॥ ४१

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने षष्ठस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

* आ० गा० १प० ५, २, १८।

अथ पञ्चम-खण्डः—

सैषा प्रथमा।

२ ३ १ २   ३ २ ३ २ ३ १ २
अग्न आयूꣳषिपवस आसुवोर्जमिषञ्चनः।

३ १ २   ३ १ २
आरेबाधस्वदुच्छुनाम्॥ १॥ ४२*

२र १   २र   १   १ २ १२र
† भ्राजा। २। भ्राजा३१उ। वा२। अग्न आयूꣳ

२ र   १र २१र २ १   २   २र१र र २   १ र
षिपवसे। आसुवोर्जमिषञ्चनः। आरेबाधस्वदुच्छुनाम्।

२र १   २र   १   २र   १र
भ्राजा। २। भ्राजा३१उ। वा२। ए। भ्राज।

३॥ ५‡॥ ४२

चतुर्दशाग्नआयूंषीत्याद्यास्तत्र जगत्यसौ।

विभ्राट् त्रिष्टुप् चित्रमिति गायत्रो द्वादशेतराः॥

आद्याग्नेः पवमानस्य स्तुतिः सौर्यस्त्रयोदश।

ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे॥

शतं वैखानसा एवं दृष्टवन्तो महर्षयः।

---

* ऋ० ७, २, १० ३=उ० ६,३,१०,१।

† "सूर्यस्य भाजाभाजे द्वे"—इति आ० गा० ३, १, २८। तत्र प्रथममिदम्।

‡ आ० गा० ३प० ६, १,५।

अथ द्वितीया।

३ २ ३ १ २ ३ २उ
विभ्राड्बृहत्पिबतुसोम्यम्मध्वा
३ १ २ ३ १ २ ३ १ २
यद्दधद्यज्ञपतावविह्रुतम्।
१ २ ३ १ २ ३ १ २ ३ १ २
वातजूतोयोअभिरक्षतित्मना
३ १ २ ३ १र २र
प्रजाःपिपर्त्तिबहुधाविराजति॥ २ ॥ ४३ *

१ २ १ र १ २ २
† हाहाउ। ३। इडा। ३। हस्। ऋतम्मे।
२ १र र १ १र
३। विभ्राड्बृहत्पिबतुसोमिया२म्माधू२। आयुर्दधद्य
र १ १र र र र
ज्ञपताववा२इह्रुता२म्। वातजूतोयोअभिरक्षता२इ
१ २१र र १ १ २३
त्माना२। प्रजाःपिपर्त्तिबहुधाविरा२जातौ२। हाहाउ।

हे "अग्ने" पवमान रूप! अस्माक मायूंषि अन्नान्येतन्नामकानि वा "पवसे" क्षरसि "नः" अस्माकम् "ऊर्जम्" अन्नरसम् "इषम्" अन्नं च "आसुव" आभिमुख्येन प्रेरय। किञ्च। "दुच्छुनां" [ रक्षोनामैतद् ] रक्षांसि "आरे" अस्मत्तो दूरएव ‡ "बाधस्व" सम्पीडय॥ १॥ ४२

---

* उ० ६,२,५,१=ऋ० ८,८,२८.२।

† "वायोर्विकर्णभासे द्वे सत्योर्वा"—इति ब्रा० ब्रा० ३,३,२८। तत्र विकर्णं नाम प्रथममिदम्।

‡ "आरे"—इति दूरनामसु पठम नैघण्टुकम् ३, २६।

१ र    १    २ १ र    १र
३। हुडा। ३। हस्। ३। ऋतम्मो। ३। औहो
२र    २    १    २ १ र    १र    २र
वाहाउ। वा। फा२ट्। ऋतम्मो। ३। औहोवा
२    २    १    २ १ र    १र    २र
हाउ। वा। फा२ट्। ऋतम्मो। ३। औहोवा
२    २    १
हाउ। वा। भ्रा२ट्॥ ७*॥ ४३

विभ्राण्नामक एतान्तु सूर्य-पुत्रो ददर्श सः।

"विभ्राट्" विभ्राजमानः विशेषेण दीप्यमानः† सूर्यः "बृहत्" परिवृढं "सोम्य" सोममयं‡ "मधु" पिबतु। किं कुर्वन्? "यज्ञ-पतौ" यजमाने "अविह्रुतम्" अकुटिलम्¶ अकण्टकम् "आयुर्द-धत्" अन्नं वा कुर्वन्§। "यः" सूर्यो "वातजूतः" वातेन वायुना प्रेर्यमाणः सन्‖ "त्मना"+ आत्मना स्वयमेव "अभि रक्षति" सर्वं जगदभिमुखम् पालयति [राशि-चक्रस्य वायु-प्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वम्] स सूर्यः "प्रजाः" "पिपर्ति" वृष्ट्यादि-प्रदानेन

---

* आ० गा० ३प० ६, १, ७।

† विभ्राडिति ज्वलतिकर्मणो "भ्राजते" - इत्यस्य रूपम (नै० १,१६.१)।

‡ "सोम मर्हति यः"—इति पा० ४, ४, १३७।

¶ "ह्रृ कौटिल्ये (भ्वा० प०)"—इत्यस्येद 'रूपमिष्ट' विह्रुतमितीत्यभिप्रायः। "ह्रृ ह्वरेश्छन्दसि (७, २. ३१)"—इति ह्रु आदेशः। "अविह्रुत मर्यादि... माग्" —इति वेददीपः य० मा० आ० स० ३१, १०।

§ "आयुः"—इत्यन्ननामसु त्रयोविंशं पदम २, ७।

‖ "अज गतौ (भ्वा०पा०)"—इत्यस्यैव णिजन्तस्येदं जूत इति रूपमित्यभिप्रायः।

+ "मन्त्रेष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

अथ तृतीया।

१ २ ३ २ ३ १ २ ३ १ २ ३
चित्रन्देवानामुदगादनीकं

१ २ ३ १ ३ १ २ ३ १
चक्षुर्मित्रस्यवरुणस्याग्नेः।

२ ३ १ २ ३ १ ३ १ २ ३
आप्राद्यावापृथिवीअन्तरिक्षꣳ

१ २ ३ १२ ३२ ३ १ २
सूर्यआत्माजगतस्तस्थुषश्च॥ ३॥ ४४ *

१ १ १ १ १ १
† उवी२उवि। उविश्वो२उवि। त्रिः। इती२इति। इतिश्वो२इति। त्रिः। असी२असि। असिश्वो२असि। त्रिः। अरूरुचोदिवम्पृथिवीम्। असी२असि। असिश्वो२असि। एवन्त्रिः। पतिर। अपामोषधीना

पूरयति पालयति वा। "बहुधा" "विराजति" विशेषेण दीप्यते च॥

"पिपर्ति"-"पुपोष"—इति, "बहुधा"—"पुरुधा"—इति च पाठौ॥ २॥ ४३

* ऋ० १, ८, ७, १।

† "आदित्यव्रतम्"—इति आ० ब्रा० १, १, १९।

३म् । ओइ । पताइरा२३४सी । एवम् त्रिः । घा

इ । चन्देवानामुदगादनीकम् । वाइस्वेषान्देवानाꣳ

समिदजस्त्रज्योतिरानना२म् । ओइ । ३ । आयुर्यन् ।

३ । अवः । ३ । चक्षुर्मित्रस्यवरुणस्याग्नेः । सुवःसꣳ

सर्पंसꣳसार्पा ३ । जनावनꣳसुवा२ःसुवः । जना२वना

२म् । सुवा२ःसुवः । त्रिः । आप्राद्यावापृथिवीआन्त

री२३क्षा३म् । इपिप्रइपीऐही । ३ । अस्तोषतस्वभा

नवाऐही । विप्रानविष्टयामताएही । ग्रावाणोवर्हिषिप्रि

याऐही । इन्द्रस्यरꣳहिम्नूचाइही । इन्द्रा२स्यरा२ ।

हिया२म् । बृहदिन्द्रस्यरꣳहियम्नूचाइही । ३ । एवं

त्रिः । सूर्यआत्माजगतस्तास्थुषार३स्वा३ । अन्तश्चरति

रोचनाऐही । ३ । अस्यप्राणादपानता । ऐही । ३ ।

२ र र र र १र२र र र १ऽ
व्यख्यन्महिषोदिवामैहो। ३। प्रोएतिप्रोएति। ३। प्रो।
२र १ ३र२ ५र र २ २र १र
एति। २। प्रो२३। एता३४औहोवा। ए३। देवा
र र १ १ १ १ १
दिवाज्योती२३४५:॥ १ *॥

२र र २र ३र२र १र र २ र
† हाउहाउहाउ। भ्राजाओवा। ३। उदुत्यञ्जा। ३।
२ १ र र र ० २ २र र ३र २र
चित्रन्देवानामुदगादनी२३का३म्। हाउ२हाउ। भ्राजा
३र र २र १ ०
ओवा। ३। तवेदसम्। ३। चक्षुर्मित्रस्यवरुणस्यआ२३
१ २र र ३र २र ३र र २र र
ग्ना३इ:। हाउ२हाउ। भ्राजाओवा। ३। देवंवहा।
१र र र २ र ० २ २र २र
३। आप्राद्यावापृथिवीआन्तरी२३क्षा३म्। हाउ२हाउ।
३र २र ३र र २ र १र र र
भ्राजाओवा। ३। तिकेतव:। ३। सूर्यआत्माजगतस्ता
० २ २र र ३र २र ३र र २ र
स्थुषा२३आ३। हाउ२हाउ। भ्राजाओवा। ३। दृशे
र १र र र ० २ २र
विश्वा। ३। सूर्यआत्माजगतस्तास्थुषा१२३आ३। हाउ

* आ० ग्रा० ३प० ६, २, १।

† "सौर्यातिषङ्गः"—इति आ० ग्रा०२, २, १९।

२ह्वाउ। भ्राजाओवा। ३। यसूर्य्यम्। २। यसूर२३रि याउ। वा३। ए३। देवादिवाज्योतीर२३४५ः॥ ४*॥

† ह्वाउ। ३। भ्राजाभ्राज। ३। आयूरायुः। ३। उदुत्यञ्जा। ३। तवेदमम्। ३। चित्रन्देवाना-मुदगादनी२३का३म्। ह्वाउ। ३। भ्राजाभ्राज। आयूरायुः। देवंवहा। ३। चक्षुर्मित्रस्यवरुण। स्याआर२३ग्ना ३इः। ह्वाउ। ३। भ्राजाभ्राज। आयूरायुः। ३। तिकेतवः। ३। आप्राद्यावापृथिवीआन्तरी२३क्षा३म्। ह्वाउ। ३। भ्राजाभ्राज। आयूरायुः। २। दृशेवि श्वा। ३। सूर्यआत्माजगतस्तास्थुषार२३श्वा३। ह्वाउ। ३। भ्राजाभ्राज। ३। आयूरायुः। ३। यसूर्य्यम्। ३।

---

* आ० गा० ४प० ६, २, ४।

† "मित्रावरुणयो ओवमित्याचक्षते"—इति आ० ब्रा० ९, २, १९।

१ २ २ २ २र१र र र ३ १ १
यसू २ ३ रियाउ। थाउ। ए३। देवादिवाज्योती २ ३
१ १
४ ५ः ॥ १९ * ॥ ४४

कुत्साः। "देवानां" दीव्यतीति देवा रश्मयः तेषां, देवानामेव वा प्रसिद्धानाम् † "अनीकं" तेजः समूह रूपं "चित्रम्" आश्चर्यकरं सूर्यमण्डलम् "उदगात्" उदयाचलं प्रयासीत्। कीदृशम्? "मित्रस्य वरुणस्याग्नेश्च चक्षुः" उपलक्षणमेतत्, एतदुपलक्षितानां जगतां चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्येव "द्यावापृथिवी" दिवं च पृथिवीं च "अन्तरिक्षं" च "आप्राः" स्वकीयेन तेजसा "आ" समन्तात् अपूरयत्। ईदृग्भूत-मण्डलान्तर्वर्ती सूर्यः अन्तर्यामितया सर्वस्य प्रेरकः परमात्मा "जगतः" जङ्गमस्य "तस्थुषश्च" स्थावरस्य च "आत्मा" स्वरूपभूतः स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य-वर्गस्य [कारणाच्च कार्यं नातिरिच्यते। तथाच पारमर्षं सूत्रम् ‡—"तदनन्यत्वमारम्भण शब्दादिभ्यः"—इति] यद्वा। स्थावर-जङ्गमात्मकस्य सर्व-प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सत् उपलभ्यते ¶ [तथाच श्रूयते—"योऽसौ तमो मुदेति सर्वेषां प्राणानादायोदेतीति" ॥ ३ ॥ ४४

* ना० मा० २प० ६, २, १९।

† "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः। सा देवता"—इति निरु० दै० १, १५।

‡ "शारीरकशास्त्र-प्रणेतृ-कपिलनामर्षि-कृतमित्यर्थः।

¶ "श्रावणीयं देवाना मुदगम इनौकं ख्यातं मित्रस्य वरुणस्याग्नेर्वापूपुरद् द्यावापृ-

अथ चतुर्थी।

१र   २र   ३ १ २ ३ २   १ २ ३ २
आयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः।
३ १ २   ३ १ २
पितरञ्चप्रयंत्स्वः ॥ ४ ॥ ४५ *

१ ऽ   १ ऽ   १   २
उवौ२। ३। हिगौ२। ३। हिगिगि। ३।

---

थिव्यौ चान्तरिक्षञ्च महत्त्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च"—इति निरु० दै० ६, १६। अत वेददीपकृद्व्याख्यानन्त्वेवम्—"परापररूपेण स्थितः सूर्योऽत्र स्तूयते। सूर्यः चित्र माश्चर्यं यथा तथा उदगात् उदयं प्राप्तः उद्गच्छति वा। तदेव आह। उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींष्यावृत्य इत्याश्चर्यम्। किम्भूतः सूर्यः? देवानां दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषां अनीकं मुखं साम्यं इत्यर्थः। यद्वानीकं समूहः किरणपुञ्ज इत्यर्थः। तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत् प्रकाशक इत्यर्थः। मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभि व्यज्यन्ते अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन् द्यावा पृथिवी दिवं भूमिं चान्तरिक्षं आप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः। एवमपररूपेण स्तुत्वापररूपेण स्तौति—किम्भूतः सूर्यः? जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मा अन्तर्यामी। य एतमादित्ये पुरुषं वेदयन्ते इन्द्रः स प्रजापतिस्तद्ब्रह्मेति 'श्रुतेः' सूर्योद्देशमनेनोच्यते इति भावः" ( य० मा० भा० अ० ७, ४२ )॥ "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। योऽसावादित्ये पुरुषः सोऽसावहम्"—इति वाजसनेय्युपनिषदन्तिमा ऋक्॥ "पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तर पुरुषमभिप्रेत्य"—इति निरु० नै० २, ३।

* छ० ६, १, ११, १=ऋ० ८, ९, ४०, १।

† "गन्धर्वाप्सरसा सानन्दप्रतिनन्दौ पश्यौ"—इति आ० ब्रा० ३, २, २९। तथेद सानन्दनाम साम।

आयङ्गौःपृश्निरक्रमीदैह्वो। ३। असदन्मातरम्पुराऐह्वो।
३। पितरञ्चप्रयंत्स्वा ऐह्वो। ३। उवी२। ३। ह्विगी२।
३। ह्विगिगि। ३॥ २ * ॥

† उवी। ३। ह्विगी। ३। ह्विगिगी। ३। आयङ्गौः
पृश्निरक्रमीदैह्वो। असदन्मातरम्पुराऐह्वो। पितरञ्चप्र
यंत्स्वाऐह्वो। उवी। ३। ह्विगी। ह्विगिगी॥ ३ ‡ ॥

¶ हाउ३वा। इन्दूः। भाजाओवा। ३। आयङ्गौः
पृश्निरक्रमीदैह्वो। हाउ३वा। इडा। भाजाओवा। ३।
असदन्मातरम्पुराऐह्वो। हाउ३वा। मात्यम। भाजाओ

---

* आ० गा० ३प० ६, २, २।

† "तत्र प्रतिनन्द"—इति आ० ब्रा० ३, २ २९।

‡ आ० गा० ३प० ६, २, ३।

¶ "तिस्र सार्पराज्ञः"—इति आ० ब्रा० ३, ९, २९। तत्र प्रथम मिदम्।

२　१　८ २ २　° २३　१ २
वा। ३। पितरञ्चप्रयंन्स्वाऐही ।' हाउ३वा। ईयौः ।
॥ ७* ॥ ४५

आयङ्गौः पृश्निरित्यस्य मार्पराज्ञो समैक्षत ।
ऋचस्तिस्रो भवेदासां विकल्पेनात्मदेवता ॥

"गौः" गमनशीलः † "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः‡ "अयं" सूर्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं "भूमिम्" "असदत्" आसीदति प्राप्नोति [ सदेश्छान्दसो लेट्¶। लृदित्वात् च्लेरङादेशः§] ततः "पितरं" पालकं द्युलोकम्, ; "च" शब्दादन्तरिक्षं "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः|| शोभन-गमनो भवति । यद्वा । पितरं स्वर्ग्लोकं प्रवर्त्तते ॥ ४ ॥ ४५

' आ० गा० ३प० ६, २, ७।

† "गौरादित्यो भवति गमयति रसान् गच्छत्यन्तरिक्षेऽथ द्यौर्यत् पृथिव्या अधि-दूरं गता भवति यश्चास्यां ज्योतींषि गच्छन्ति"—इति निरु० नै० २,१४।

‡ "पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्पृष्टा रसान् संस्पृष्टा भासं ज्योतिषां संस्पृष्टो भासेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च"—इति निरु० नै० २,१४।

¶ "लिङर्थे लेट्"—इति पा० ३, ४, ७।

§ "पुषादिद्युताद्यॢदितः परस्मैपदेषु"—इति पा० ३, १, ५५।

|| "स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता"—इति निरु० नै० २, १४।

. अथ पञ्चमी ।

३ १ २ ३ २उ ३ १ २ ३ २
अन्तश्चरति रोचनास्य प्राणादपानती ।
२र ३ १ २र
व्यख्यन्महिषो दिवम् ॥ ५ ॥ ४६ *

१र र र र र १ १र र र र र २
† औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१
१ २ ५ २ १ २ र १र १र
औ । वा२३ । भू२३४वात् । अन्तश्चरति रोचना । औ
र र र र १ १र र र र र २
होऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ ।
१ २ ५ २ १ २र १र २र १र १र र
वा२३ । जा२३४नात् । अस्य प्राणादपानती । औहो
र र र १ १र र र र र २
औहोवा । होइ । २ । औहोऔहोवा । हा३१उ ।
१ २ ५ १ २ १र १र र
वा२३ । वा२३४र्द्धान् । व्यख्यन्महिषो दिवम् । औहो
र र र र १र र र र र २
औहोवा । होइ । २ । औहोऔहोवा । हा३१उ ।
१ १र र र र र र १ १र
वा२३ । का२३४रात् । औहोऔहोवा । होइ । २ । औ
र र र र २ १ २ ५ १र र
होऔहोवा । हा३१उ । वा२३ । भू२३४तीः । औहो

---

* उ० ६, १, ११, २= आ० ८, ८, ४७, २ ।

† "भवतां भूतिः"—इति आ० गा० ३, १, २९ ।

औहोवा। होइ। २। औहोऔहोवा। हाउ१उ। वा२। अभ्राजोज्योतिरभ्राजीत्। औहोऔहोवा। हो इ। २। औहोऔहोवा। हाउ१उ। वा२३। ए३। सर्वान्कामानशीमहो२३४५॥ ६ *॥

† हाउ३वा। भूतम्। भ्राजाओवा। ३। अन्तश्चरतिरोचना। ऐहो। हाउ३वा। पृथिवी। भ्राजाओ वा। ३। अस्यप्राणादपानताऐहो। हाउ३वा। साहः। भ्राजाओवा। ३। व्यख्यन्महिषोदिवामैहो। हाउ३वा। तेजः॥ ८ ‡॥ ४६

¶ अन्तर्देवेपूइरोचा१मा२इ। ३। अन्तश्चरतो३रो

---

* आ० गा० १प० ६, २, ६।

† तत्र द्वितीयमिदम् —इति। (आ० ब्रा० ३, १, १८)

‡ आ० गा० १प० ६, २, ८।

¶ "मित्रावरुणयोर्विन्त्यावयतं —इति आ० ब्रा० ३, १, १८।

२ २ २२ १२ २
चा१ना२। अस्यप्राणादा३पाना१ता२इ। व्यख्यन्महो३
१ २ २ २२ १ २ २
षोदा१इवा२म्। अन्तर्देवेषू३रोचा१सा२इ। २। अन्त
२२ १ १ ३ ५२ २ १ १२ १२ २
र्देवेषू३रो२३। चा२सा२३४औहोवा। ए३। देवादिवा
२ १ १ १ १ १
ज्योती२३४५ः॥ १८ *॥ ४६

"अस्य" सूर्यस्य "रोचना" † रोचमाना दीप्तिरन्तःशरीर-मध्ये मुख्य-प्राणात्मना "चरति" वर्त्तते। किं कुर्वती? "प्राणादपानती" [मुख्य-प्राणस्य प्राणाद्याः पञ्च वृत्तयः। तत्र प्राणनं नाडीभि रूर्ध्वं वायोर्निर्गमनम्] तथाविधात् प्राणात् प्राणनादनन्तरम् अपानती [अपाननं नाडीभि रवाङ्मुखं वायोर्नयनम्] तत् कुर्वन्ती [ अपपूर्वादनितेर्लटः शतृ, (३, २, १२४) अदादित्वाच्छपो लुक् (२, ४, ७२)। उगितश्चेति (४, १, ६) ङीप्। शतुरनुम इति ‡ नद्या उदात्तत्वम्। यद्वा। "अन्तः" द्यावापृथिव्योर्मध्ये "अस्य" सूर्यस्य "रोचना" रोचमाना दीप्तिः "चरति" गच्छति [ रुच दीप्तौ (भ्वा० आ०)। अनुदात्तेतश्च

* ग्रा० गा० ३प० ६, ९, १८।

† रोचना इति "रोचते"—इति ज्वलतिकर्मणोरूपमित्यभिप्रायः (निघ० १ १६, ८)।

‡ "शतुरनुमोनद्यजादी"—इति पा० ६, १, १७३।

अथ षष्ठी ।

३ २उ ३ १ २ ३१ २ ३ १ २
त्रिंशद्धामविराजतिवाक्पतङ्गायधीयते ।

१ ३ २ ३ २ ३ १ २
प्रतिवस्तोरहद्युभिः ॥ ६ ॥ ४७ *

हाउ३वा। आपः। भ्राजाओवा। ३। त्रिंशद्धा

मविराजताऐहो। हाउ३वा। ऊर्पा। भ्राजाओवा।

३। वाक्पतङ्गायधीयताऐहो। हाउ३वा। दीप्तः।

हलादेरिति (३,२.१४९) युच्]। किं कुर्वन्ती? "प्राणात्" प्राणनादुदयादनन्तरम् "अपानती" सायाह्न-समये अस्तङ्गच्छन्ती। ईदृश्या दीप्त्या युक्तः अतएव "महिषो" महान् सूर्यः ‡ "दिवम्" अन्तरिक्षं उदयास्तमयोर्मध्ये "व्यख्यत्" विचष्टे प्रकाशयति [महे रचि महेष्टिषजिति औणादिकष्टिषच् प्रत्ययः। चक्षिङः ख्याञ् (२,४,५४) छान्दसे लुङि ¶ अस्यतिवक्ति ख्यातीत्यादिना (३, १, ५२) लेरङादेशः ॥ ५ ॥ ४६

* उ० ६, १. ११, ३ = ऋ० ८, ८, ४७, ३।

† तयं वाग्निम मिदम्—इति श० ब्रा० ३, २, २८।

‡ "महिषः"—इति महन्नाम सत्र अष्टम मेघपट्कम ३, ३। "महान् कस्मान्मानेना न्यान् जहातीति शाकपूणि मंहनीयो भवतीति वा"—इति निरु० नै० ३, १३।

¶ "छन्दसि लुङ्लङ्लिटः"—इति पा० ३, ४, ६।

२र २र ३र र १ र र र र २ऽ
भ्राजाओवा। ३। प्रतिवस्तोरहद्युभाऐही। हाउवा।
१ र
ज्योतिः ॥ ८ * ॥ ४७

"त्रिंशद्धाम" धामानि स्थानानि [ वचनव्यत्ययः ( ३, १, ३८ ) ] "वस्तोः" वासरस्य † अहोरात्रस्यावयवभूतानि। "अह" शब्दोऽवधारणे ‡। "द्युभिः" सूर्यस्य दीप्तिभिरेव ¶ "विराजति" विराजते विशेषेण दीप्यते [ व्यत्ययेनैकवचनम् ( ३, १, ३८ )। मुहूर्तान्यत्र धामान्युच्यन्ते। पञ्चदश रात्रेः पञ्चदशाह्नः ] "पतङ्गाय" पतति गच्छतीति पतङ्गः सूर्यः § तस्मै सूर्याय स्तुति-रूपा "वाक्" "प्रतिधीयते" प्रतिमुखं स्तोतृभि र्विधीयते क्रियते। यद्वा "वस्तोः" अह्नः "त्रिंशत्" "धाम" धामानि [ घटिकाभिप्रायमेतत् ] त्रिंशद्घटिकाः [ अत्यन्तसंयोगे द्वितीया (२,३,५)] एतावत् कालं "द्युभिः" दीप्तिभि रसौ सूर्यो "विराजति" विशेषेण दीप्यते। तस्मिंश्च समये "वाक्" त्रयी-रूपा तस्मै "पतङ्गाय" "प्रतिधीयते" प्रतिमुखं धार्यते तं पूर्वं

* आ० गा० ३प० ६, २, ९।

† "वस्तोः"—इति अहर्नामसु प्रथमं नैघण्टुकम ( १,९ )।

‡ "अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्येते। अयमहेदं करोत्व यमिदं ह करिष्यतीदं न करिष्यतीति"—इति निरु० नै० १, ५।

¶ "द्योतत इति सतः"—इति निरु० नै० १, ६।

§ "पतङ्गाः"—इति अश्वनामसु द्वाविंशं नैघण्टुकम १, १४।

अथ सप्तमी ।

१ २ २ ३ १ २ ३ १ २ ३ १ २

अपत्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।

१ २ ३ १ २

सूराय विश्वचक्षसे ॥ ७ ॥ ४८*

अथाष्टमी ।

१ २ ३ १ २ २ ३ १ ३ २ ३ १ २

अदृश्रन्नस्य केतवो वि रश्मयो जनाꣳ अनु ।

१ २ ३ १ २

भ्राजन्तो अग्नयो यथा ॥ ८ ॥ ४९ †

‡ हाउहाउहाउ। भ्राआओवा। ३। दिदीच्छ्वि

श्वतस्पृथुः। उदुत्यञ्जाता३वाइदा१सा२म्। देवंवह

सेवत इत्यर्थः ॥ [श्रूयते हि—"ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः"—इति। यदा त्विह सूक्ते सार्पराज्ञ्या आत्मस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ६ ॥ ४७

---

* ऋ० १, ५, ७, २। † ऋ० १, ४, ७, ३।

‡ "चडेभ्राः परिधयक्षतूनाम्"—इति आ० ब्रा० ३, ५, २९। तत्र प्रथम मिदम्।

१ २ २र र १ १ १
न्तो३काइ्ता१वा२ः। दृशे विश्वाया३सू रा१या२म्। अ
र र १ २ २ र १ १
पत्ये तया३वोया१था २। नक्षत्रायन्तीयाक्तू१भा२इः।
२र र १ २ २ १ २
सूरायविश्वा३चाक्षा१सा२इ। अदृश्रन्नस्या३काइ्ता१वा२ः।
२ र १ २ २र र १ २ ऽ
विरश्मयोजा३ना ऽ३आ१नू२। भ्राजन्तोअग्ना३योया१था
२र र २र २र ३र र ३र २ ४
२३। हाउ३हाउ। भ्राजाओवा। २। भ्राजाओ
३ १ १ १ १
३५वा६५६। ई२३४५॥ ११*॥

२र र ३ २र २र र २ र १ १
† हाउ२हाउ। भ्राजाओवा। ३। दिवो विश्वतस्पृ
१ १ र १ २ २र
थुः। उदुत्यञ्जाता३वाइदा१सा२म्। देवंवहन्तो३
१ २ २ र र १ १र २ र
काइ्ता१वा२ः। दृशेविश्वाया३सूरा१या२म्। अपत्ये
र १ २ २ र १ २ २र र
ताया३वोया१था२। नक्षत्रायन्तीयाक्तू१भा२इः। सूरा
१ २ २ १ २
यविश्वा३चाक्षा१सा२इ। अदृश्रन्नस्या३काइ्ता१वा२ः।

* आ० गा० ३प० ६, २, ११।

† नवमेवेदं द्वितीयम्। (आ० गा० ३, २, १९)

२ ३ १ २ ३२ ३ १ २
विरश्मयोजाऽ३नाऽ२श्माऽ२नू२। भ्राजन्तोअग्नाऽ३योया१थाऽ२३।
३२ ३ ३ ३२ ३२ ३ ३ २ ४
हाउ२हाउ। प्रुक्राश्रोवा। ३। प्रुक्राऽ३श्रोऽ५वा६५६।
३ १ १ १ १
ई२३४५॥ १२*॥ ४८॥ ४८

"त्ये" "तायवः" "यथा" प्रसिद्धास्तस्करा इव "नक्षत्राणि" देवगेहरूपाणि [ "देवगृहा वै नक्षत्राणि"—इति श्रुत्यन्तरात्। यद्वा, इह लोके मानुषा ये स्वर्गमाप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते। तथाच श्रूयते—"यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्"—इति। यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते। "सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीति"—आम्नानात्। यास्कस्त्वाह—"नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि नक्षत्राणीति च ब्राह्मणम्"—इति] यथाविधानि नक्षत्राणि "अक्तुभिः" रात्रिभिः सह "अप यन्ति" अपगच्छन्ति। "विश्वचक्षसे" विश्वस्य सर्वस्य प्रकाशकस्य "सूराय" सूर्यस्य आगमनं दृष्ट्वेति शेषः [ तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीत्याकुलायन्त इत्यर्थः। तायुरिति स्तेननाम (नै ३, २४, ७) तायुस्तस्कर इति तन्नामसु पाठात्। अक्तुरिति रात्रिनाम (नै० १, ७, ४) शर्वरी अक्तुरिति तन्नामसु पाठात्॥ ७॥ ४८

* आ० गा० ३प० ६, २, १२।

अथ नवमी।

३१२ ३१२ ३१२
तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य्य।
२३१ २ ३२
विश्वमाभासिरोचनम्॥ ९॥ ५०*

अथ दशमी।

१२ ३ २३१ २ ३१र २र३१२
प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान्।
३१उ ३क २र३१
प्रत्यङ्विश्वꣳस्वर्दृशे॥ १०॥ ५१†

अथ एकादशी।

१२ ३१२ ३१२३२ १२
येनापावकचक्षसाभुरण्यन्तञ्जनाꣳअनु।
१२ ३१२
त्वंवरुणपश्यसि॥ ११॥ ५२‡

"अस्य" सूर्यस्य "केतवः" प्रज्ञापकाः "रश्मयः" दीप्तयः "जनान् अनुव्यदृश्रन्" जनान् सर्वान् अनुक्रमेण प्रेक्षन्ते। सर्वं जगत् प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः—"भ्राजन्तः" दीप्यमाना "अग्नय इव"॥

"व्यदृश्रन्"-"अदृश्रम्"—इति पाठौ॥ ८॥ ४९

---

* ऋ० १, ४, ७, ४। † ऋ० १, ४, ७, ५। ‡ ऋ० १, ४, ७, ६।

२र र१ २र२र१रर २र१ २
* हाउ२हाउ। भूताओवा।०३। दिदीविविश्वतस्पृ

१ २ १ २ २र ३१२
थुः। तरणिर्विश्वा३दार्शा१ता२ः। ज्योतिष्कृदसीसूरा१

२ र र १ १ २ र र
या२। विश्वमाभासी३रोचा१ना२म्। प्रत्यङ् देवा३

१ २ २ र १ २
नांवा१३शा२ः। प्रत्यङ् देषी३मानू१षा२न्। प्रत्यङ्

१ २ २र र र १ २
विश्व"१स३वार्ह१शा२इ। येनापावका३चाक्षा१सा२।

२ १ २ २ १ २
भुरण्यन्तञ्जा३ना"१आ१नू२। त्वंवरुणा३पाश्या१सा२३इ।

२र र१ ३र२र१र र २र२ ४ ५
हाउ२हाउ। भूताओवा। "२। भूता३ओ५वा६५६।

३११११
ई२३४५ ॥ १३ † ॥

२र र१ १र२र ३र र २ र १ २
‡ हाउ२हाउ। तेजाओवा। ३। दिदीविविश्वतस्पृ

१ २ १ २ २र ३ १ २
थुः। तरणिर्विश्वा३दार्शा१ता२ः। ज्योतिष्कृदसीसूरा

२ र र १ २ २ र ०र
१या२। विश्वमाभासी३रोचा१ना२म्। प्रत्यङ् देवा३

* अत्र तृतीय मिदम् ( आ० ग्रा० ३, २, २९ )।

† आ० गा० ३प० ६, २, ११।

‡ अत्र चतुर्थ मिदम् ( आ० ग्रा० ३, २, २९ )।

१ २ २ ३ १ १ २ २
भावा१इआ२ः। प्रत्यङ् देवी३मानू१षा२न्। प्रत्यङ्
१ १ २३ ३ ३ १ २
विश्व॑ꣳस्व३वाहं१ई२इ। येनापावका३चक्षा१सा२।
२ १ २ २ १ २
भुरण्यन्तञ्जा३नाꣳ१आ१नू२। त्वंवरुणा३पाश्या१सा२३इ।
२३ ३ ४ ३२३२ ३ २३ ३२ ३ ४ ३ १
हाउ२वाउ। तेजा३ओवा। २। तेजा३ओ५वाई५६। ई२
१११
३४५॥ १४ *॥ ५०॥ ५१॥ ५२

हे "सूर्य" त्वं "तरणिः" प्रगन्ता अन्येन गन्तुमशक्यस्य महतोऽध्वनो गन्तासि †। [ तथाच स्मर्यते—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्द्धेन क्रममाणं नमोऽस्तु ते"—इति ] यद्वा। उपासकानां रोगात्तारयितासि ["आरोग्यं भास्करादिच्छेत्"—इति स्मरणात्] तथा "विश्वदर्शतः" विश्वैः सर्वैः प्राणिभिर्दर्शनीयः [ आदित्य-दर्शनस्य चण्डालादि-दर्शन-जनित-पाप-निवर्हण-हेतुत्वात्। तथाचापस्तम्बः-"दर्शने ज्योतिषां दर्शनम्"—इति यद्वा, "विश्वं" सर्वं भूतजातं "दर्शतं" द्रष्टव्यं प्रकाश्यं येन स तथोक्तः ] तथा "ज्योतिष्कृत्" ज्योतिषः प्रका-

* ऋा० मा० इप० ६, २ १४।

† "तरणिः"—इति निघण्टौ तु (२, १५) क्षिप्रनामसु पाठः। तरणिर्गोऽत्र माता (४३७ पृ०) मिति मन्त्र-व्याख्यायामस्य मेव व्याचख्यौ तारकमिति; माधवस्तु 'क्षिप्रं दातारं वा' -इति।

शस्य कर्त्ता, सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः। यद्वा, चन्द्रादीनां [ रात्रौ हि अस्तमये चन्द्रादिषु सूर्य-किरणाः प्रतिफलिताः अतोऽन्धकारं निवारयन्ति। यथा द्वारस्थ दर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्वर्ति तमो निवारयन्ति तद्वदित्यर्थः ] यस्मादेवं तस्मात् "विश्वं" प्राप्तं "रोचनं" रोचमानम् "अन्तरिक्षम्" "आ" समन्तात् "भासि" प्रकाशयसि ॥

यद्वा, हे "सूर्य" अन्तर्यामितया सर्वस्य प्रेरक परमात्मन्! "तरणिः" संसाराब्धेस्तारकोऽसि। यस्मात् त्वं "विश्वदर्शतः" विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः [अधिष्ठान-साक्षात्कारे हि आरोपितं निवर्तते ] "ज्योतिष्कृत्" ज्योतिषः सूर्यादेः कर्त्ता [तथाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत"—इति* ] ईदृशस्त्वञ्चिद्रूपतया "विश्वं" सर्वं दृश्यजातं "रोचमानं" दीप्यमानं यथा भवति तथा "आ भासि" प्रकाशयसि [मेवं न्यक्करणे हि सर्वं जगत् दृश्यते।†

---

* "चन्द्रमामनसोजातश्चक्षोःसूर्योअजायत। श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत"—इति य० मा० शा० म० ३१ष० १२क०। 'यथा दध्यादि-द्रव्याणि, गवादयः पशवः, ऋगादयो वेदाः, ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्नाः एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। मनसः सकाशात् चन्द्रमाः जातः चक्षोः चक्षुषः सकाशात् सूर्यः अजायत। वायुः प्राणश्च श्रोत्रात् कर्णादजायत। मुखादग्निरजायत' —इति च तद्व्याख्याने महीधर-कृतम्।

† "हे सूर्य! त्वं ज्योतिष्कृत् तेजसः कर्त्तासि विश्वं आभासि प्रकाशयसि च अग्निविद्युत्ग्रहनक्षत्रचन्द्रप्रभृतान् कान्दिन् मदीयं ? जरत्यर्थः। कीदृशं विश्वम्? रोचनं दीप्यमानं

तथाचाम्नायते—"तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"—इति * ॥ ८ ॥ ५०

हे सूर्य ! त्वं "देवानां" "विशः" मरुन्नामकान् देवान् † ["मरुतो वै देवानां विशः"—इति श्रुत्यन्तरात्। तान्मरुन्नामकान्देवान्] "प्रत्यङ् उदेषि" प्रतिगच्छन्नुदयं प्राप्नोषि ‡। तेषा मभिमुखं यथा भवति तथेत्यर्थः। तथा "मानुषान्" मनुष्यान् प्रत्यङ् उदेषि। तेऽपि यथास्मदभिमुख एव सूर्य उदेतीति मन्यन्ते तथा "विश्वं" प्राप्त "स्वः" द्यां लोकं "दृशे" द्रष्टुं "प्रत्यङ्" उदेषि। यथा स्वर्लोक-वासिनो जनाः स्वस्याभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः [एतदुक्तं भवति—ये लोकाः

---

त्वत् प्रकाशेनेति भावः। कीदृशस्त्वं तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः। "अर्त्तिविस्तृभ्योऽनिरिति (उणा० २. ९८) तरतेरनिप्रत्ययः। विश्वदर्शतः विश्वस्य दर्शतः दर्शनीयः दृशेरतच् ॥"—इति वेददीपः।

* हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्त मनुभाति सर्वं तस्य भासा सर्व मिदं विभाति"—इति मुण्डकोपनिषत् २, १०।

† "विशः"—इति, अग्ने अरितरिति व्याख्यायां (१५७ पृ०) प्रजाः। विशोविश इति व्याख्यायां (२४४ पृ०) प्रजाः। यद्वाव इति व्याख्यायां प्रजाः, तथैव विशे त्वे चेति च। प्रवोमहे इति व्याख्यायां (९९७पृ०) प्रजाः। निघण्टु-द्वितीय-तृतीये मनुष्यनामसु पठ्यते च।

‡ "प्रत्यङ्ङिदं सर्वं मुदेषि। प्रत्यङिदं सर्वं मभि विपश्यसीति"—इति निरु० दै० ६, २४।

पश्यन्ति ते जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति *। तथाचाम्नायते—"तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगात्"—इति ॥ १० ॥ ५१

हे "पावक" सर्वस्य शोधक ! "वरुण" अनिष्ट-वारक सूर्य ! त्वं "जनान्" प्राणिनः "भुरण्यन्तं" धारयन्तं पोषयन्तं वा इमं लोकं† "येन"‡ "चक्षसा" प्रकाशेनानु पश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः । यद्वा, उत्तरस्या ऋचि सम्बन्धः तेन चक्षुसा उदेषीति ¶। तथाच यास्केनोक्तं§—तत्ते वयं स्तुम इति वाक्यशेषोऽपिवोत्तरस्या मन्वयस्तेन व्याख्यातीति ( निरु० दै० ६, २२ )" ॥ ११ ॥ ५२

* "अपि वैतस्या मत्र। यत्नापावक . . . । तेन नो जनानभि वि पश्यसि"—इति निरु० ६, २५-२६ ।

† "भुरण्युमिति क्षिप्रनाम भुरण्युः शकुनिर्भूरि मध्वानं नयति स्वर्गस्य लोकस्यापि वोढा तत्सम्पाती भुरण्युरनेन पावकख्यानेन भुरण्यन्तं जनां अनु त्वं वरुण पश्यसि"—इति निरु० दै० ५, २१ ।

‡ ऋचि तु "येना"—इति पाठः । मच द्व्यच इति ( ६, ३, १३५ ) दीर्घः ।

¶ "सर्वमेधे पश्चाकारेणाग्निश्चीयते तद्रूप मात्मानं सम्पाद्य भक्ति माप्नोति सहस्र प्रार्थ्यते—हे पावक शोधक येन चक्षसा दर्शनेन-त्वं भुरण्यन्त मनुपश्यसि ; क्षिप्रपाती पक्षी भुरण्युः, भुरण्यु मात्मानं करोति भुरण्यति, भुरण्यतीति भुरण्यन्-तम ; क्रियासातत्यप्रत्ययः । सर्वमेधयाजिनं भुरण्युपक्षिरूपात्मानं कृत्वा स्वर्गं व्रजन्तं येन चक्षसानु पश्यसीत्यर्थः । तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण त्वं पश्य वरुणः सूर्यः"—इति वेददीपः य० मा० सं० अ० १२ म० ११ क० ।

§ "अपिवोत्तरस्यामित्ययमेव यास्क वचनम्। अन्वर्थत्वादित्यर्थसम्बन्धः।"

अथ द्वादशी।

१२ २र३१२ ३ १ ३ १ १ ३ १ २
उद्यामेषिरजः पृथ्वहा* मिमानो अक्तुभिः।
२ ३ १ २
पश्यञ्जन्मानि सूर्य्य ॥ १२ ॥ ५३ †

अथ त्रयोदशी।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३कर२
अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्रः ‡।
१ २ ३ १ २
ताभिर्याति स्वयुक्तिभिः ॥ १३ ॥ ५४ ¶

अथ चतुर्दशी।

३ १ २ ३ २ ३ २ ३ १ २
सप्त त्वा हरितो रथे वहन्ति देव सूर्य्य।
३ १ २
शोचिष्केशं विचक्षण ॥ १४ ॥ ५५ §

॥ पञ्चम-दशति ॥

---

* "रजस्पृथहा"—इति च ऋ० पाठः। † ऋ० १, ४, ७, ७।

‡ "नप्त्यः"—इति ऋ० पाठ। ¶ ऋ० १, ४, ७, ९।

§ ऋ० १, ४, ७, ८।

१र   र   २ २र१र र   २ र १
* हाउ२हाउ । सत्याओवा । ३ । दिदीहिविश्वत

२ १   २ र र   १ २   २ र र ७र
स्पृथुः । उद्यामेषिरा३जाःपा१र्थ २ । अहामिमानो३

१ २   २ र १ १   २
आक्तु भा २३ः । पश्यञ्जन्मानी३सूरा१या २ । अयुक्त

१ २   र र   १ २   १र
सप्ता३शुन्ध्यु १वा २ः । सूरोरथस्या३नाप्ता१या २ः । ता

र   १ १   २ र   १ २
भिर्यातिस्वा३यूक्ता१३भी २ः । सप्तत्वाहरी३तोरा१था २

१ र   १ १   २र र   १ २
हु । वहन्तिदेवा३सूरा१या २ । शोचिष्के शंवी३चा त्ना१णा

१र र   ३ १र ३र र   ३ २ ४
२३ । हाउ३हाउ । सत्याओवा । ३ । सत्या३ओ५वा६५

७१ १ १ १
६ । ई२३४५ ॥ १५ ॥

१र र   ३ २र१र र   २ र १   २
† हाउ२हाउ । ऋताओवा । ३ । दिदीहिविश्वतस्पृ

१   २ र र   १ १   २ र र ७र १ २
थुः । उद्यामेषिरा३जाःपा१र्थ २ । अहामिमानो३आक्तु

२ र   १ २   २
१भा २३ः । पश्यञ्जन्मानो३सूरा१या २ । अयुक्तसप्ता-

* तत्र पञ्चम मिदम् ( आ० ग्रा० ३, २, २९ ) ।

† आ० ग्रा० ४प० ६, २, १५ ।

‡ तत्रान्तिमं षष्ठ मिदम् ( आ० ग्रा० ३, २, २९ ) ।

४६ ख

१ २ २र २र १ २ २र २र
मून्ध्यूश्वा२ः। सूरोरथस्या३नाम्ना१या२ः। ताभिर्याति
१ २ २ २र १ २ २
स्वा३यू क्ता१इभी२ः। सप्तत्वाहरी३तोरा१था२इ। वह
२र १ २ २र २र १ २ २र
न्तिदेवा३सूरा१या२। शोचिष्के शंवी३चाचा१णा२३। हाउ
२र २र ३ २र३र २र ३ २ ४ ३ १
हाउहाउ। ऋतास्रोवा। ३। ऋता३ओ५वा६५६। ई२
१ ११
३४५॥ १६ * ॥ ५३॥ ५४॥ ५५

हे "सूर्य !" त्वं "पृथु" सुविस्तीर्णं "रजः" लोकं ["लोका रजांस्युच्यन्ते" †—इति यास्क-वचनात्] द्युलोकं "द्याम्" अन्तरिक्षलोकम् "उदेषि" उद्गच्छसि ‡। किं कुर्वन्? अहानि "अक्तुभिः" रात्रिभिः सह "मिमानः" उन्मानयन् [आदित्यगत्यधीनत्वादहोरात्र-विभागस्य] तथा "जन्मानि" जननवन्ति भूतजातानि "पश्यन्" प्रकाशयन्॥

"उद्याम्"-"विद्याम्"—इति पाठौ॥ १२॥ ५३

---

* आ० गा० ३प० ६, २, १९।

† "रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते असृगहनी रजसी उच्येते। रजांसि चित्रा विचरन्ति तन्यव इत्यपि निगमो भवति"—इति निरु० ४, १९।

‡ "व्येषि द्यां रजश्च पृथु महान्तं लोकमहानि च मिमानोऽक्तुभीरात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य। अपि वा पश्यन्नसि जातानि सूर्य।अपि वा पश्यन्नसि जातानि सूर्य। अपि वा प्रदर्शयत्याम्"—इति यास्कः दै० ६,२१।

"सूरः" सर्वस्य प्रेरकः सूर्यः* "शुन्ध्युवः" शोधिका अश्वस्त्रियः †। तादृशीः "सप्त" सप्त-सङ्ख्याकाः ‡ "अयुक्त" स्व-रथे योजितवान् ¶। कीदृशीः? "रथस्य" "नप्त्यः" नपातयित्र्यः। याभिर्युक्तो रथो याति न पतति इदृशीरित्यर्थः। एवम्भूताभिस्ताभिरश्वस्त्रीभिः "स्वयुक्तिभिः" स्वकीय-योजनेन रथे सम्बद्धाभिः "याति" यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्य मिति वाक्यशेषः॥ १३ ॥ ५४

हे "सूर्य!" "देव" द्योतमान। "विचक्षण!" सर्वस्य प्रका-

---

* सूरशब्दः सूर्यार्थोऽत्र सर्वत्र—ऋ० १, २, ४, ३—२, १, ४, ८—५, २, ३, ७—उ० ४, १, ८, १—४, २, १, १२—५, १, ८, २—५, १, ८, ३—६, १, २, १—६, १, ४, २—९, १, ४, १। सोमार्थयमनयोरेव—उ० ३, १, ५, १—४, १, २०. २॥

† "शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात् तस्यैव। * * *। * शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवति। आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव"—इति निरु० नै० ४, १६।

‡ "सप्त सुप्ता संख्या सप्तादित्यरश्मय इति वदन्ति"—इति निरु० नै० ४, २६। "सप्त युञ्जन्ति रथमेकचक्रमित्यादि निरु० नै० ४, २७। "सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त"—इति मु० उ० २.१।

¶ "रथे तिष्ठन्नयति वाजिनः पुरस्तात् सतो यत्र यत्र कामयते सुषारथिः। कल्याण-सारथि रभीशूनां महिमानं पूजयामि मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः"—इति निरु० दै० ३, १६। अपिच—"रथं क्षिप्रं सावतं मघं वयं श्रवणीय साक्यामह वा यस्मिन्नस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी"—इति निरु० दै० ५, ५०।

शयित: ! "सप्त" सप्त-सङ्ख्याकाः "हरितः" अश्वाः* रस-हरण-शीला रश्मयो वा† "त्वा" त्वां "वहन्ति" प्राप्नुवन्ति । कीदृशम् ? "रथे" अवस्थित मिति शेषः । तथा "शोचिष्केशं" शोचींषि‡ तेजांस्येव यस्मिन् केशा इव¶ दृश्यन्ते स तथोक्तस्त मिति §॥

॥ १४ ॥ ५५

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने षष्ठोऽध्यायस्य पञ्चमः खण्डः ॥

---

* "हरित आदित्यस्य"—इति अश्वविशेषनामसु निघ० १, १५, ३ । "अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा । * * * । तस्याश्ववत् देवतावच्च निगमा भवन्ति"—इत्यादि निरु० नै० २, २७ ; दै० ४, ३०-३१ ।

† "सप्त ऋषयः"—इति रश्मिनामसु निघ० १, ५, १२ । अत्र च यास्कः "रश्मिर्यमनात्"—इत्यादि निरु० नै० २, १५ ।

‡ "शोचिः"—इति ज्वलन्नामधेयेषु षष्ठं नैघण्टुकम् १, १७ ।

¶ "केशी केशा रश्मयस्तैस्तद्वान् भवति काशनाद्वा प्रकाशनाद्वा । तस्यैषा भवति * * ० । केशीदं सर्व मिद मभि विपश्यति केशीदं ज्योतिरुच्यत इत्यादित्य माह । अथाप्येते इतरे ज्योतिषी केशिनी उच्येते धूमेनाग्नी रजसा च मध्यमः । * * * । एक एषा मित्यग्निः पृथिवीं दहति । सर्व मेकोऽभि विपश्यति कर्मभि रादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य"—इति निरु० दै० ६,१५-२६-२७ ।

§ "सप्तैतानादित्य रश्मीनयमादित्यो गिरति मध्यस्थानोर्ध्वं शब्दो यत एतस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति परि भुवः परिभवन्ति सर्वाणि कर्माणि वर्षकर्मणेत्यधिदैवतम् । अथाध्यात्मं सप्त मानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्ध्वं शब्दो यान्यस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति परि भुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्मणेत्यात्मगतिमाचष्टे"—इति निरु० प० २, ११ ।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ६ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिक-मार्ग-प्रवर्त्तक-
श्रीवीर-वुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने आरण्यएवाध्येतव्यः
षष्ठोऽध्यायः समाप्तः ॥

॥ समाप्तम् आरण्यम् पर्व आरण्यकाण्डं वा ॥

॥ इति चतुर्थम्पर्व ॥

॥ सामवेद संहितायां छन्दआर्चिकः समाप्तः ॥

॥ ओं नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ अथ महानाम्न्यार्चिकः ॥ *

( भाष्यकृतोभूमिका )

ऐन्द्रीरथ महानाम्नीः शक्वरीर्वा विकर्षिताः ।
पञ्चभिः सहिता अन्ते पुरीषपदनामभिः ॥
एताः प्रकृतितस्तिस्र उपसर्गैस्तु संयुताः ।
नव सङ्ख्या इति प्राहुर्वेदाध्ययनशालिनः ॥
ऐतरेय-ब्राह्मणेऽपि शस्त्रे षोडशि-नामके ।
तिस्रः प्रोक्ता महानाम्न्यस्त्रैलोक्यात्मत्ववर्णनात् ॥

---

* महानाम्नीनां पाठस्तु न तु छन्दआर्चिके नापि उत्तरार्चिके परं छन्दआर्चिके समाप्ते तत्पुस्तकान्त्यभागे एव सर्वत्र दृश्यते, एवं आरण्यगाने समाप्ते च ततोऽनन्तरं महानाम्नी-सामपाठस्तत्रैव पुस्तके सर्वत्रेति परिशिष्टत्व मासां मत्वा च शायन इति छन्दआर्चिकान्ते एव व्याख्यातवान् भगवान् सायणः ।

तत्र हि महानाम्नीना मुपसर्गानुपसृजन्त्ययं वै लोकः प्रथमा महानाम्न्यान्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीयेति । नन्वेताः शक्करीच्छन्दस्का ब्याख्यायन्त इत्युक्तायेन षट्पञ्चाशदक्षराः स्युः । तथा च समाम्नातं चतुर्विंशत्यादि चतुरुत्तरमिति ( पि० ) । अस्यार्थः—गायत्र्यादीना मतिधृत्यन्तानां छन्दसां चतुर्विंशत्यक्षरा ण्यारभ्य उत्तरोत्तरं चतुर्षु चतुर्षु अक्षरेष्वधिकेषु सत्सु उष्णि- गादि-च्छन्दांसि जायन्ते*। एवं क्रमशोऽक्षराधिक्ये सति शक्करी षट्पञ्चाशदक्षरा सम्भवतीति । एता ऋचस्तु शक्करीभ्योऽधि- काक्षरा दृश्यन्ते । तस्मादासा मुपसर्गाक्षरैराधिक्यं न तु स्वत इति ज्ञायते । तर्हि के पुनरुपसर्गाः ? के पुनः शाक्कराः पादाः ? इत्युच्यते—

---

| * छन्दांसि | | अतिच्छन्दांसि | | विच्छन्दांसि | |
|---|---|---|---|---|---|
| छन्दोनाम | अक्षरसंख्या | छन्दोनाम | अक्षरसंख्या | छन्दोनाम | अक्षरसंख्या |
| १ गायत्री | २४ | १ अतिजगती | ५२ | १ कृतिः | ८० |
| २ उष्णिक् | २८ | २ शक्करी | ५६ | २ प्रकृतिः | ८४ |
| ३ अनुष्टुप् | ३२ | ३ अतिशक्करी | ६० | ३ आकृतिः | ८८ |
| ४ बृहती | ३६ | ४ अष्टिः | ६४ | ४ विकृतिः | ९२ |
| ५ पङ्क्तिः | ४० | ५ अत्यष्टिः | ६८ | ५ संस्कृतिः | ९६ |
| ६ त्रिष्टुप् | ४४ | ६ धृतिः | ७२ | ६ अतिकृतिः | १०० |
| ७ जगती | ४८ | ७ अतिधृतिः | ७६ | ७ उत्कृतिः | १०४ |

प्रथमा। "विदामघवन्विदा"--इति द्विपदा ऋगुपसर्गः। ततः "गिरा प्रचीनाम्पतेँ"—इत्याद्यास्त्रयोऽष्टाक्षराः शाक्कराः। ततः "स्वर्णांशुः"—इति पञ्चाक्षरः पादः। अत्राक्षर-विश्लेषेण पञ्चाक्षरत्वं द्रष्टव्यम्। "प्रचेतनप्रचेतयः"—इत्यष्टाक्षरः। एतौ द्वावुपसर्गसञ्ज्ञौ। "इन्द्रद्युम्नायनइषे"—इति पादोष्टाक्षरः शाक्करः। "एवाहिशक्रः"—इति पञ्चाक्षर उपसर्गः। "रायेवा-जायवज्रिवः"—इत्याद्यास्त्रयः पादाः शाक्कराः। "आयाहिपि-बमत्स्व"—इति पादोऽष्टाक्षर उपसर्गः। इत्येव सृक् प्रथमा॥

अथ द्वितीया। "विदारायेसुवीर्यम्"—इति द्विपदा उपसर्गः। "मंहिष्ठवज्रिन्नृञ्जसे"—इत्याद्यास्त्रयोऽष्टाक्षराः पादाः शाक्कराः। ततः "अंशुर्नशोचिः"—इति पञ्चाक्षरः पादः। "चिकित्वोअभिनोनय"—इति पादः। एतौ द्वावुपसर्गौ। "इन्द्रोविद्रे-तमुस्तुहि"—इति पादोऽष्टाक्षरः शाक्करः। "इशेहिशक्रः"—इति पञ्चाक्षरः पाद उपसर्गः। "तमूतयेहवामहे"—इत्याद्यास्त्रयो-ऽष्टाक्षराः पादाः शाक्कराः। "क्रतुश्छन्दऋतम्बृहत्"—इति पाद उपसर्गः। इत्येवं द्वितीया॥

तृतीयस्याः। "इन्द्रन्धनस्यसातयेहवामहे"—इति द्विपदा उपसर्गः। "सनःस्वर्षत्"—इत्याद्यास्त्रयोऽष्टाक्षराः शाक्कराः पादाः। "अंशुर्मदाय"—इति पञ्चाक्षरः पादः। "सुम्नआधेहि

नीवमो"—इत्यष्टाक्षरः पादः । एतौ द्वावुपसर्गौ । "पूर्तिः-प्रविष्ठग्रस्यते"—इति पादोऽष्टाक्षरः शाक्करः । "वशीह्यिशक्रः" —इति पञ्चाक्षर उपसर्गः । "ननन्नमव्यंसन्नसे"—इत्याद्यास्त्रयो ऽष्टाक्षराः शाक्कराः । "शूरोयोगोषुगच्छति"—इति पादौ द्वावुपसर्गाविति तृतीया ऋक् सम्पन्ना ॥

अत्र प्रथमायाः सप्त शाक्कराणि पदानि, पञ्चोपसर्गाः । एवं द्वितीयस्या अपि पदान्युपसर्गाः । तृतीयायास्तु सप्त शाक्कराणि पदानि, षडुपसर्गाः । इत्युक्तार्थो निदानकल्पे सूत्रादिकं सम्यगालोचयद्भिः पूर्वाचार्यैः श्लोकद्वये सङ्गृह्य दर्शितः—

"प्रथमं द्विपदा, त्रीणि शाक्कराणि पदान्यतः ।
पञ्चार्णाष्टाक्षरौ चोपसर्गाविकश्च शाक्करः ॥ १ ॥
पञ्चार्ण उपसर्गोऽथ त्रयस्ते वहिरन्तिमः ।]
इय माद्या ; द्वितीयैवं ; तृतीया पुनरन्तिमः ।
अधिकोऽष्टाक्षरः पाद उपसर्ग इति स्थितिः॥२॥"—इति ॥

अत्र सर्वत्रोपसर्गान् परित्यज्य केवल-पदगताक्षर-सङ्ख्यायां कृतायां षडधिकपञ्चाशत्-सङ्ख्याकान्यक्षराणि जायन्ते । अतस्तद् द्वितीया शक्करीति न विरोधः ॥ एतासु गीयते साम यत्तच्छाक्कर मुच्यते । तत्पञ्चमेऽह्नि पृष्ठेषु होतुःपृष्ठं विधीयते ।

उपसर्गैः संयुताना मासा मिन्द्रोऽधिदेवता ।
माध्यन्दिनं यत् सवनं सर्व मैन्द्र मिति स्थितम् ॥

अत्रैवाश्वलायनेन स्व-ब्राह्मण मनुसरता कश्चिद्विशेषोऽनुष्टुब् गायत्री सम्पादनादिर्दर्शितः—

"प्रचेतनप्रचेतयायाहिपिबमत्स्व ।
क्रतुश्छन्दऋतम्बृहत्सुम्नआधेहिनोवसः ॥"—इति । *

"चिकित्सोऽभिनोनयशूरोयोगोषुगच्छति ।
सखासुशेवोऽद्वयुः ॥"—इति । †

गायत्र्यादिरित्येव मादिः एष तु प्रयोग-सौकर्यार्थः । अस्माभिस्त्विदानीं मर्थ-सौकर्यार्थं क्रमेण सोपसर्गा ऋचो व्याख्याताः । ‡

---

* एषानुष्टुप् सम्पन्ना, अष्टाक्षर-चतुष्पदात्मकस्य सम्पादनात् ।

† एषा गायत्री सम्पन्ना, अष्टाक्षर-त्रिपदात्मकस्य सम्पादनात् ।

‡ ग्रन्थकारादयो हि ग्रथनीयं व्याख्येयं वा प्रथमं स्व-मनस्येव सम्पादयन्ते, ततश्च लेखन्यादिभिः काम्यतेऽतोऽत्र 'व्याख्याताः'—इति भूतप्रयोगो नासाधुः, "कौमुदीयं विरच्यते"—इत्यादावप्येव मेव ।

